# विश्व-संस्कृतम्

विश्वज्योतिः सदा शुभ्रं संस्कृतं विश्वमाचरत् ।
साहित्यस्य सतः सिद्धया उदितं विश्व-संस्कृतम् ॥

वर्षम् १ } ज्येष्ठः २०२१ (मई १९६४) { अङ्कः ३

## शाश्वती वाक्*

भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाऽक्षभिर्[1] यजत्राः[2] ।
स्थिरैरङ्गैस्तुष्टुवांसस्[3]तनूभिर्
व्यशेम[4] देवहितं[5] यदायुः ॥

शतमिन्नु शरदो अन्ति[6] देवा
यत्रा नश्चक्रा[7] जरसं[8] तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति
मा नो मध्या[9] रीरिषता[10]ऽऽयुर्गन्तोः[11] ॥

(ऋक् १,८९,८;९)

---

*अत्रोदात्तस्वरितावेव स्वरावङ्कितौ । अधोरेखया पूर्व उपरिरेखया चोत्तरः ।

---

१. अक्षिभिः । २. पूज्याः । ३. *अतिबलवन्तः । ४. [illegible]याम ।
५. *स्वाभाविकम् । ६. अभितः । ७. कृतवन्तः । ८. *वयोऽवधिः ।
९. मध्ये । १०. क्षीयेत । ११. गमनस्य ।

# संस्कृतभाषा-नीराजना (आरती)

परशुरामः*

जय संस्कृतभाषे, जय संस्कृतभाषे,
कुरु करुणां करुणार्द्रे, कुरु करुणां करुणार्द्रे, त्वच्छरणे दासे। जय…

वेदा भगवद्गीता उपनिषदः सर्वाः, उपनिषदः सर्वाः
तव वै दिव्यशरीरं, तव वै दिव्यशरीरं यैस्त्वं सद्गर्वा। जय…

कपिलपतञ्जलिशङ्करगोतमकणभुग्भिः, गोतमकणभुग्भिः,
जैमिनिमुख्यैर्मुनिभिः जैमिनिमुख्यैर्मुनिभिरिष्टा बहुसद्भिः। जय…

व्यासः कालीदासो भारविकविबाणौ, भारविकविबाणौ—
भवभूतिर्भवभूतिः, भवभूतिर्भवभूतिः, भासश्रीहर्षौ। जय…

कोऽन्यो लोके यो वै समतामेषां कुरुताम्, समतामेषां कुरुताम्—
वाल्मीकिश्च सुबन्धुः, वाल्मीकिश्च सुबन्धुः, काव्यस्यामास्ते। जय…

वेदौ ज्योतिर्धनुषोः पुनरायुर्वेदः पुनरायुर्वेदः—
अतुलरसायनशास्त्रं, अतुलरसायनशास्त्रं कस्तुलयेल्लोके। जय…

किं तच्छास्त्रं लोके न त्वं यन्मूलम्, न त्वं यन्मूलम्—
नास्ति जगद्धितकारिणि, नास्ति जगद्धितकारिणि, जनसुखमनुकूलम्।
जय…

विश्वस्मिन् विश्वेऽस्मिन् शान्तिश्चेन्मृग्या, शान्तिश्चेन्मृग्या—
त्वच्चरणौ हित्वा नो, त्वच्चरणौ हित्वा नो गतिरिह जनवासे। जय…

जनिमरणाद्भुतदुःखैः परिपूर्णे भुवने, परिपूर्णे भुवने—
तव चरणौ किल शरणं, तव चरणौ किल शरणं स्यातामाशासे। जय…

वयमपि भवभयभीता भी-तापह-रूपाम्, भी-तापह-रूपाम्—
त्वां शरणं प्राप्ताः, कुरु त्वां शरणं प्राप्ताः, कुरु करुणां करुणार्द्रे।
जय…

त्यक्त्वा खर्वं कूपं जलनिधिरुपसेव्यः, जलनिधिरुपसेव्यः—
विश्वे विश्वजना इह, विश्वे विश्वजना इह सादरमर्थ्यन्ते। जय…

रामः परशुसपूर्वोऽपूर्वैः स्तुतिदीपैः, मातः स्तुतिदीपैः—
आरार्त्तिक्यं कुर्वन्, आरार्त्तिक्यं कुर्वन् त्वच्चरणौ श्रयते। जय…

---

*[illegible]त्री, व्याकरणाचार्यः, पुरा जम्बूनगरस्थ-श्रीरघुनाथसंस्कृतमहाविद्यालयस्य प्रधानाचार्यः।

# पूर्वध्वनि-कालिकानामालङ्कारिकाणां रस-विचारः

जयमन्तमिश्रः*

ध्वनिसम्प्रदाय-प्रतिष्ठापकादानन्दवर्धनाचार्यात् पूर्वकाले अलङ्कार-शास्त्रे भरतमुने रससम्प्रदायः, आचार्यभामहस्य अलङ्कार-सम्प्रदायः, आचार्यवामनस्य रीतिसम्प्रदायश्च परां प्रसिद्धिं प्रापुः। प्रकृत-प्रतिपिपादयिषित-विषय-सम्बन्धे मम पर्यालोचनस्य विषयः, यो हि विषय-शीर्षकेणापि सूचितो भवति, भामह-दण्ड्युद्भट-वामन-रुद्रटानां रसविषयकविचार एवास्ति। यद्यपि 'नाट्यशास्त्रस्य' पर्यालोचनया इदं स्पष्टं भवति यत् तत्र नाट्य-काव्ययोस्तादृशो भेदो नासीन् मुनेरभीष्टो यो नाम भामह-दण्डि-प्रभृतीनां समयात् प्रचलितोऽभूत्, अतएव 'नाट्यशास्त्रे' नाट्यस्य कृतेऽपि काव्यशब्दस्य अनेकशः प्रयोगा उपलभ्यन्ते[1] तथापि नाट्यशास्त्र-प्रणेता नाट्यशास्त्राचार्य-रूपेणैव प्रसिद्धो नतु अलङ्कारशास्त्रप्रणेतेव आलङ्कारिकरूपेणेति नास्त्यविज्ञातं काव्यतत्त्वविदाम्। अतो भरतस्य नाट्यशास्त्रम् एतद्विवेच्यविषये नायाति।

भरतमुनेर्नाट्यशास्त्रादनन्तरम् अलंकारशास्त्रे प्रथमः प्रामाणिको ग्रन्थ आचार्यभामहस्य 'काव्यालङ्कार' एवोपलभ्यते। अग्निपुराणस्य काव्यशास्त्रीयभागे[2] विष्णुधर्मोत्तरस्य च तृतीयखण्डे[3] काव्यशास्त्रस्य सविस्तरं विवेचनं प्राप्यते। डा० पी० वी० काणे-महोदयस्य डा० सुशीलकुमारदेमहोदयस्य च विचारेण अग्नि-पुराणस्य स भागो नास्ति नवमशतकात् पूर्वकालिकः। डा० राघवन्-

*एम्० ए०, पीएच० डी०, व्याकरण-साहित्याचार्यः, संस्कृतविभागाध्यक्षः, विहारविश्वविद्यालयः, मुजफ्फरपुरम्।

१. नाट्यशास्त्रे १६, १६६ ; १७, ५, ४२, ४४, ८७, ८८, ९५, ९६, १११, ११२, ११५, १२१ ; २०, ४६, ४७, ७२, ८५, ८६, १०१ ; २१, १, ३३, ३६, ५५, ५६, १३२ ; २२, १, ३ इत्यादि।

२. अग्निपुराणे ३३-३४६ अध्यायेषु।

३. विष्णुधर्मोत्तरपुराणे तृतीये खण्डे १४-३० अ०।

महोदयस्य विचारे तु धाराधीशभोजराजादपि पूर्वकालिको नास्ति सः। विष्णुधर्मोत्तरस्य काव्यशास्त्रीयभागस्तु षष्ठशतकात् पूर्वकालिक एवेति काणेमहोदयस्य सिद्धान्तः। रसविषयकेऽस्मिन् प्रकृतप्रबन्धे नीरसादैतिहासिक-समय-विवेचनाद् विरम्य विष्णुधर्मोत्तरकार-सहितानां भामह-दण्डयुद्भटवामन-रुद्रटानां पौर्व-ध्वनिकालिकानां प्रमुखाणां काव्याचार्याणां मते कीदृशं रस-स्वरूपम् इत्येवात्र विविच्यते।

भामह-दण्डयुद्भट-रुद्रटा अलङ्कार-सम्प्रदायस्य वामनश्च रीति-सम्प्रदायस्याचार्यरूपेण प्रसिद्धः। ये हि ध्वन्यमानमपि रसादि-रूपमर्थं वाच्योपस्कारकतया अलङ्कारपक्ष-निक्षिप्तं मन्यमाना रसादीनामपि अलंकाराङ्गतयैव विचारं कुर्वते ते अलंकार-सम्प्रदायस्य आचार्याः।

विष्णुधर्मोत्तरे तु नाट्यशास्त्रानुसार्येव रसवर्णनं विद्यते। केवलं तत्र स्पष्टरूपेण प्रसिद्धैरष्टाभी रसैः सह शान्तरसस्याप्युल्लेखो दृश्यते[४] तस्याभिनेयत्वमपि विस्पष्टं प्रतिपादितं वर्तते[५]। एतेन 'अभिनवभारत्याम्' प्रतिपादितमाचार्याभिनवगुप्तमतं सप्रमाणं भवति यत् "शान्तो नाम शमस्थायिभावात्मकः..." इत्येवं-प्रकारेण नाट्यशास्त्रेऽपि शान्तरसस्य विचारो भरतेन कृतः" इति। भामहात् प्राचीने 'अनुयोगद्वारसूत्र' नामके ग्रन्थेऽपि नव काव्यरसा उपलभ्यन्ते। तेषु च नवसु रसेषु व्रीडनकरसेन सह प्रशान्तोऽपि प्राप्यते[६]। अतो नाट्यशास्त्रेऽपि शान्तस्य उल्लेख आसीदिति आचार्याभिनवगुप्तमतं नासमीचीनमित्यस्य विषयस्य सविस्तरो विचारो मया अन्यत्र कृतः।[७]

अलंकार-सम्प्रदायस्य प्रतिष्ठापक आचार्यभामहः "किमिव हि मधुराणां मण्डनं नाकृतीनाम्"[८] इत्येतत्-सिद्धान्तविपरीतं "न कान्त-मपि निर्भूषं विभाति वनिताननम्"[९] इत्येवंरूपेण मन्यमानोऽलङ्कार-

४. विष्णुध० ३, १५, १४।
५. तत्रैव ३, ३०, ६।
६. अनुयोगद्वारसूत्रे गाथा ६३।
७. 'काव्य की आत्मा' अ० २, अधि० २।
८. अभिज्ञानशाकुन्तले १, १६।
९. भामहालङ्कारे १, १३।

स्यैव प्रामुख्यं प्रकटयामास, तत्र च लोकातिक्रान्तगोचरतया प्रसिद्धाम्[१०] अलंकार-सामान्यरूपामतिशयोक्त्यपरनामिकां वक्रोक्ति-मेव काव्ये सर्वस्वरूपाममन्यत, अनयैव चार्थस्य विभावनमपि स्वीचकार[११]। तस्य मतेन एतस्या अभावे काव्ये न सौन्दर्यं नापि काव्यत्वम्।

वक्रोक्तेरीदृशं प्राधान्यं मन्यमानेनापि भामहेन प्रेयो-रसवदूर्ज-स्विनामलंकाराणां विवेचनप्रसङ्गे रसभावानां-प्रतिपादनं कृतमेव। तत्र शृङ्गारादिरसानां स्पष्टे वर्णने रसवदलङ्कारः, भावानां वर्णने प्रेयोऽलङ्कारश्च भवतः[१२]। रसभावादिस्थले रसवदाद्यलङ्कारत्वं युक्तं नवेति विचारान्तरम्। एतस्य सविस्तरं पर्यालोचनं मया स्वकीये अन्वेष-प्रबन्धे[१३] कृतम्। ध्वन्यालोक[१४]-वक्रोक्तिजीवित-[१५] काव्यप्रकाशादि[१६]ग्रन्थेषु च सयुक्तिकं रसवदाद्यलङ्कारत्वखण्डनं कृतमस्ति।

महाकाव्यं लक्षयता भामहेन "रसैश्च सकलैः पृथक्"[१७] इत्युक्त्वा काव्ये रसस्यावश्यकत्वं महत्त्वं च प्रकटितम्। "सैषा सर्वत्र वक्रोक्ति-रनयार्थो विभाव्यते"[१८] इत्यस्य विवरणं कुर्वता अभिनवगुप्तपादा-चार्येण—'प्रमदोद्यानादिभिर्विभावतां नीयते विशेषेण च भाव्यते रसमयी क्रियते'[१९] इत्येव प्रोक्तम्। एतेन वक्रोक्त्यापि विशेषेण भावनम् अर्थात् रसमयीकरणमेव प्रतिपादितं भवति। अन्यच्च

१०. तत्रैव २, ८१, ८५।

११. सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते। यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना॥ तत्रैव २, ८५।

१२. तत्रैव ३, ५।

१३. 'काव्य की आत्मा' २, ४।

१४. ध्वन्यालोके २, ५।

१५. वक्रोक्तिजीविते ३, ११५।

१६. काव्यप्रकाशे ४, ४ द्वाचतुर्विंशसूत्र-वृत्तिः।

१७. भामहालंकारे १, २१।

१८. तत्रैव २, ८५।

स्वादुकाव्य-रसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमालीढ-मधवः पिबन्ति कटुभेषजम्[२०] ॥

इति भामहाचार्यस्य प्रतिपादने रसस्य महत्त्वं सुस्पष्टं भवत्येव ।

काव्यशोभाकरान् धर्मानलंकारान्[२१]मत्वा अलंकार-क्षेत्रं विस्तारयता आचार्यदण्डिना तु

यच्च सन्ध्यङ्ग-वृत्त्यङ्ग-लक्षणाद्यागमान्तरे ।
व्यावर्णितमिदं चेष्टमलंकारतयैव नः[२२] ॥

इत्येवंरूपेण सन्ध्यङ्गादेरपि अलंकारत्वमेव स्वीचक्रे । दण्डिनोऽलंकार-लक्षणं व्याचक्षाणेन भोजराजेन तु—"तत्र काव्यशोभाकरान् इत्यनेन श्लेषोपमादिवद् गुण-रस-भाव-तदाभास-प्रशमादीनप्यनुगृह्णाति, मार्ग-विभागकृद्-गुणानामलङ्क्रियात्वोपदेशेन श्लेषादीनां गुणत्वमिव अलंकारत्वमपि ज्ञापयति[२३] ।" इत्येवं प्रतिपादयता अलंकार-कुक्षावेव गुण-रस-भावादीनामपि समावेशः कृतः । एवंप्रकारेण दण्डिमते अलंकारस्य अङ्गित्वे सिद्धेऽपि—

प्रेयः प्रियतराख्यानं रसवद् रसपेशलम् ।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षं च तत् त्रयम्[२४] ॥"

इति कथनेन प्रेयोरसवदूर्जस्विनामलंकाराणां युक्तोत्कर्षत्वप्रतिपादने रसभावादीनामेव महत्त्वं प्रतिपादितं भवति । अन्यच्च, आचार्यदण्डिना—

"मधुरं रसवद् वाचि वस्तुन्यपि रस-स्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः[२५] ॥"

इति

---

२०. भामहालंकारे ५, ३ ।
२१. काव्यादर्शे २, १ ।
२२. तत्रैव २, ३६७ ।
२३. सरस्वतीकण्ठाभरणे पृ० ६१२ ।
२४. काव्यादर्शे २, २७५ ।
२५. तत्रैव १, ५१ ।

"कामं सर्वोऽप्यलंकारो रसमर्थे निषिञ्चति[२६] ।"

इत्यादि च प्रतिपादयता रसस्य महत्त्वं प्रदर्शितमेव ।

प्राक् प्रीतिर्दर्शिता सैव रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद् वचः[२७] ॥"

इत्यादि कथनेन भट्टलोल्लटस्य मत इव दण्डिनोऽपि मते रसस्योत्पत्तिरेव प्रतीयते ।

रस-भाव-तदाभास-भावशान्त्यादीनां प्राधान्य-स्थानेऽपि रसवत्-प्रेयस्वदूर्जस्वि-समाहितानामलंकाराणां स्वीकरणादेव भट्टोद्भटः अलंकार-सम्प्रदायस्याचार्यः । अलंकारस्य महत्त्वं मन्यमानोऽप्ययं रसादेः सविस्तरं विचारं चकार—

रत्यादिकानां भावानामनुभावादिसूचनैः ।
यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम् ॥
रसवद् दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्द-स्थायि-संचारि-विभावाभिनयास्पदम्[२८] ॥

इत्यादि रूपेण रसवदाद्यलंकाराणां स्वरूपं चाभ्यधात् । शान्तसहिताः शृङ्गारादयो नवरसा नाट्ये भवन्तीति च तेनोक्तम् । तत्र शृङ्गारादिशब्दै रत्यादिस्थायिभावैः, निर्वेदादिसंचारिभिः, आलम्बनोद्दीपनविभावैः, आङ्गिक-वाचिकाहार्य-सात्त्विकरूपै रसकार्यभूतैश्चतुर्भिरभिनयैश्च रसः प्रतिपाद्यते । यद्यपि 'रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः'[२९] इति मम्मटोक्तदिशा उद्भटमतं न परवर्ति-सिद्धान्तानुकूलं तथापि रसादेः सविस्तर-वर्णनेन प्रतिपादितं तन्महत्त्वं सुव्यक्तमेव । उद्भटस्य रसस्वरूपप्रतिपादनविषयके विचारे, ध्वनिसम्प्रदायस्य रस-विचार इव स्पष्टे सत्यपि उभयत्र अयमेव महान् भेदः यत् आनन्दवर्धनादिमते यत्र रसादयो

२६. तत्रैव १, ६२ ।
२७. काव्यादर्शे २, २८१ ।
२८. काव्यालंकारसारसंग्रहे ४, २-३ ।
२९. काव्यप्रकाशे पञ्चमोल्लासे ।

मुख्यास्तत्रोद्भटमते तेऽलंकाराः[३०]। रसस्यैव अलंकारत्वमङ्गीकृत्य अलंकार्यालंकारभेदं कर्तुं नाशक्नुवन् उद्भटादय इति यदुच्यते तत् सत्यमेव। भावशान्त्यादिस्थले[३१] समाहितालङ्कारस्य उद्भटेनैव कृतं नवीनमुद्भावनम्।

काव्ये गुणविशिष्टपदरचनात्मिकाया रीतेरात्मत्वं स्वीकुर्वता आचार्यवामनेन "दीप्तरसत्वं कान्तिः"[३२] इति कान्तिगुणं लक्षयता रीतेरङ्गतयैव रसस्यापि प्रतिपादनं कृतम्। कान्तिगुणश्च समग्रगुणोपेताया वैदर्भ्याः साधारणगुणत्वेन गौडीयायाश्च असाधारणगुणत्वेन प्रतिपादितः। "तासां पूर्वा ग्राह्या गुणसाकल्यात्, न पुनरितरे स्तोकगुणत्वात्"[३३] इत्येवंप्रकारेण स्तोकगुणाया गौडीयाया— असाधारणगुणतया वर्णितस्य कान्तिगुणस्य अङ्गीभूतानां रसानामुपेक्षितत्वं च एतन्मते दरीदृश्यते। काव्ये रीतेरात्मत्वमङ्गीकुर्वाणस्य देहात्मवादिनो वामनस्य पूर्वोक्तं मतं समीचीनं नवेति विचारान्तरम्। मयापि स्वकीये शोधप्रबन्धे विषयस्यास्य युक्तायुक्तत्वं सुप्रदर्शितम्।[३४]

आचार्यरुद्रटेन स्वीये 'काव्यालंकार' नाम्नि ग्रन्थे रसस्य यादृशं सविस्तरं विवेचनं कृतं तादृशं न केवलम् अलंकारसम्प्रदायग्रन्थेषु अप्राप्यम् अपि तु परवर्तिध्वनिसम्प्रदाय-ग्रन्थेष्वपि दुर्लभायमानम्। उद्भटेन प्रतिपादितेभ्यो नवभ्यो रसेभ्योऽधिकः प्रेयोनामकः दशमो रसोऽनेनैव सर्वप्रथमं प्रतिपादितः। प्रत्येकं रसः विभावानुभावव्यभिचारि-स्थायिभाव-प्रदर्शन-पुरस्सरः सोदाहरणः सुप्रदर्शितश्च। शृङ्गारस्य संभोगविप्रलम्भौ इति द्वौ भेदौ प्रदर्श्य प्रथमानुराग-मान-प्रवास-करुणरूपेण पुनर्विप्रलम्भस्य चत्वारो भेदाः प्रदर्शिताः।

ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे।
लघु मृदु च नीरसेभ्यस्ते हि त्रस्यन्ति शास्त्रेभ्यः[३५] ॥

एवं प्रकारेण रुद्रटेन रसस्य महत्त्वं मुक्तकण्ठं प्रादर्शि।

---

३०. तत्रैव ४, ४ कारिकायां लघुवृत्तौ।

३१. काव्यालंकारसारसंग्रहे ४, ७।

३२. काव्यालंकार सूत्रवृत्तौ ३, २, १५।

३३. तत्रैव १, २, १४-१५।

३४. 'काव्य की आत्मा' ८, २।

३५ रुद्रटालंकारे १२. १।

मधुरादीनामिव रत्यादिभावानां यथा रसनाद् रसत्वं तथैव निर्वेदादिष्वपि रसत्वमित्यपि तेन प्रत्यपादि[३६]। भामहादिभिर्यथा रसादेर्निरूपणं रसवदाद्यलंकारेषु कृतं न तथा रुद्रटेन। एवं सत्यपि रुद्रटः अलंकारसम्प्रदायस्यैव अनुयायी आचार्यः, इत्यस्य रहस्यं तु इदमेव प्रतीयते यदनेन भावालंकारे[३७] एव प्रतीयमानार्थस्य अन्तर्भावः कृतः। अतएव एतत्प्रदर्शितं भावालङ्कारोदाहरणं मम्मटादिसम्मतं ध्वनेर्गुणीभूतव्यङ्ग्यस्य च उदाहरणं विद्यते। आचार्य-रुद्रटस्य रसविषयको राद्धान्तो रुद्रटालंकारस्य प्रसिद्धटीकाकृता नमिसाधुना साधु प्रतिपादितः—"अर्थालंकारमध्ये रसा अपि किन्नोक्ताः। उच्यते, काव्यस्य हि शब्दार्थौ शरीरम्। तस्य च वक्रोक्ति-वास्तवादयः कटककुण्डलादय इव कृत्रिमा अलंकाराः। रसास्तु सौन्दर्यादय इव सहजा गुणा इति भिन्नस्तत्-प्रकरणारम्भः[३९]" इति।

अत्र 'शरीरस्य सौन्दर्यादय इव रसाः काव्यस्य सहजा गुणा' इति कथनादेव वस्तुतस्ते न परीक्ष्यवादिनः रसस्तु तदैव वस्तुतो रसो भवति यदा ध्वन्यमानः सन् सहृदय-हृद्ये प्रकाशते। पौर्व-ध्वनिकालिका आलंकारिका वाच्योपस्कारकतयैव रसं मन्यमानाः तस्य वास्तविकमभिव्यज्यमानं स्वरूपमजानानाः काव्यस्य आत्मानं रस-ध्वनिमेव नाज्ञासिषुरिति शम्।

---

३६. रसनाद् रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः। निर्वेदादिष्वपि तन्निकाम-मस्तीति तेऽपि रसाः॥ तत्रैव १२, ४।

३७. तत्रैव ७, ३८-४०।

३८. काव्यप्रकाशे १, २ कारिकाया उदाहरणम्।

३९. रुद्रटालंकारे १२, २ कारिकायां नमिसाधोष्टीका।

# भारतीयदर्शनेषु मनः-स्वरूप-निरूपणम्

[ गताङ्कादग्रे ]

दीनेशचन्द्र शास्त्री*

**जैनदर्शने**—जैनास्तु मनसः करणत्वेऽपि न इन्द्रियत्वमिति मन्यन्ते । इन्द्रियाणां नियतैकैकविशेषगुणग्राहित्वनियमात्, मनसस्तु सर्वार्थग्राहकत्वादनिन्द्रियत्वम् । तथा चोक्तं स्याद्वादमञ्जर्याम्—प्रत्यक्षं सांव्यवहारिकं द्विविधमिन्द्रियानिन्द्रियनिमित्तभेदादिति । परीक्षामुखसूत्रेऽपि "इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकमिति । अनिन्द्रियनिमित्तं प्रत्यक्षं हि मानस-प्रत्यक्षमेव । उक्तञ्चानन्तवीर्येण प्रमेयरत्नमालायाम्—"इन्द्रियं चक्षुरादि, अनिन्द्रियं मन" इति । इन्द्रियवत् मनसोऽपि द्रव्य-भाव-भेदाद् द्वैविध्यम् । द्रव्यमनो हि द्रव्येन्द्रियवत् पुद्गलारब्धम् । भावमनस्तु अर्थग्रहणशक्तिव्यापाररूपम् । तथैवोक्तं (प्रभाचन्द्रेण) प्रमेयकमलमार्तण्डे—एवं मनोऽपि द्वेधा द्रष्टव्यमि"ति । द्रव्यमनस एव करणत्वेन व्यवहारः । तस्य पौद्गलिकत्वादेव मध्यपरिमाणवत्त्वमनित्यत्वञ्च युक्तं, सुखदुःखादिसाक्षात्कारकरणत्वञ्च । तथा च प्रमेयरत्नमालायाम्—"सुखादिज्ञानस्वरूपसवेदनस्य मानसप्रत्यक्षत्वादि"ति "स्मृत्यादिसंवेदनमपि मानसमेव" इति च । सुखदुःखादिवदात्मापि मानसप्रत्यक्षविषय एव । उक्तञ्च माणिक्यनन्दिना परीक्षामुखसूत्रे "घटमहमात्मना वेद्मीति कर्मवत् कर्तृकरणक्रियाप्रतीते" रिति कर्तुरात्मनोऽपि भवति प्रत्यक्षप्रतीतिः । ज्ञानमपि न ज्ञानान्तर-ग्राह्यमपितु स्वसंवेदनमेव । "ज्ञानं तस्मात् स्वव्यवसायात्मकमित्यभ्युपगन्तव्य" मिति प्रभाचन्द्रेणोक्तम् ।

आत्मा स्वदेहपरिमाण एव । ज्ञानं तु स्वपराभासि आत्मगुणरूपमात्मस्वरूपञ्च, ज्ञानात्मनोरत्यन्तभेदस्य स्याद्वादे निराकृतत्वात् । तथा चोक्तं गुणरत्नेन—"ज्ञानादिधर्मेभ्यो भिन्नाभिन्न" इत्यादि, "चैतन्यलक्षणो जीव" इति च ।

---

* अध्यापकः, संस्कृत-महाविद्यालयः, कलकत्ता ।

**बौद्ध-दर्शने**—बौद्धास्तु सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिकभेदभिन्ना अपि द्वादशायतनान्तर्गतं मनो बुद्धिव्यतिरिक्तत्वेन एव करणत्वेन मन्यन्ते। तथा चोक्तं बोधिचित्तविवरणे—

ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च।
मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः॥

उक्तञ्च शान्तरक्षितेनापि तत्त्वसंग्रहे—

चक्षुराद्यतिरिक्तं हि मनोऽस्माभिरपीष्यते।
षण्णामनन्तरोद्भूत-प्रत्ययो यो हि तन् मनः॥

तस्य तु न नित्यत्वमपि तु क्षणिकत्वमेव। तथाहि—"नित्ये तु मनसि प्राप्ताः प्रत्ययायौगपद्यतः" इत्यादिना मनसो नित्यत्वं निराकृतम्। उक्तञ्च धर्मकीर्तिना न्यायबिन्दौ—"स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन् मनोविज्ञानम्"इति। "एतच्च (बौद्ध) सिद्धान्त-प्रसिद्धं मानसं प्रत्यक्षमि"ति च टीकायां धर्मोत्तराचार्येण। मन एव बहिरिन्द्रियसहायं रूपादिषु विज्ञानं जनयति। तथा चोक्तं—"शब्द-स्पर्श-रूप-रस-गन्ध-विषयाः सुखादिविषयाश्च षडपि प्रत्ययाः चतुरः प्रत्ययान् प्रतीत्योत्पद्यन्ते" इति।

बुद्धितत्त्वन्तु पृथगेव चित्तात्मकमान्तरसमुदायान्तर्गतमालयविज्ञानप्रवृत्ति विज्ञानभेदभिन्नं क्षणिकरूपं सर्वसौगतसम्प्रदायसिद्धम्। यथोक्तं तत्रैव—

"तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत्स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्॥"

इति। अपि च तत्त्वसंग्रहे—

"प्राग्भूतं भूतनिर्भासं ज्ञानन्तु जनयेत् परम्।"

इति

"तस्मात्तत्रादिविज्ञानं स्वोपादानबलोद्भवम्।
विज्ञानत्वादि हेतुभ्य इदानीन्तनचित्तवत्॥"

—इत्यादिश्लोकैर्ज्ञानस्य क्षणिकत्वम्, एकसन्तानवर्तिपूर्वज्ञानस्य उत्तरज्ञानोत्पादकत्वम्, आलयविज्ञानधाराया आत्मत्वञ्च प्रतिष्ठापितम्। विज्ञानस्य सुखादीनाञ्च स्वप्रकाशत्वमात्मसंवेदनरूपमेव क्षणिकविज्ञानान्तरस्य क्षणिकपूर्वविज्ञानप्रकाशकत्वासम्भवाद् विज्ञानातिरिक्तस्यात्मनोऽसत्त्वाच्च। तथा चोक्तं धर्मकीर्तिना न्यायविन्दौ—

"सर्वं चित्तचैत्तानात्मसंवेदनमिति।"

"अतीतानन्तरविज्ञानं मनः।"

इत्यभिधर्मकोषवाक्यानुसारेण तु प्रत्येकं पूर्वविज्ञानमेवोत्तरविज्ञानापेक्षया मन इति न तद् विज्ञानातिरिक्तं किञ्चिदन्यदिति सौगतसाम्प्रदायिकानां मतम्।

अत्रेदमवधेयं यत् सर्वेषामेव तार्किकादिबौद्धान्तानां दार्शनिकानां मनसोऽतिरिक्तत्वे (आत्मव्यतिरिक्तत्वे) जडत्वे, कारणत्वे चाविप्रतिपत्तिः। यदपि केषाञ्चित् लोकायतिकानां मनस एव चेतनात्मत्वं मतं तदपि विचारासहत्वात् शिष्टापरिगृहीतत्वाच्चानादरणीयम्।

**पाश्चात्त्यदर्शने मनसो जडत्वम्**—पाश्चात्त्यदार्शनिकैरपि बहुभिर्यत् मनस एव चेतनत्वमात्मत्वञ्चाभिमतं तदेव विरुद्धजडवादिप्रदर्शितदोषनिचयपरिहारासामर्थ्यात् (जडवादिभिः) तेषां पराभवे कारणम्। अपि च पाश्चात्त्ये मनोविज्ञाने बह्वाडम्बरेण मनसो यज् जडत्वं प्रतिष्ठापितं तत् "अन्नमयं मनः" इत्यादिश्रुतेः भारतीयानामतिप्राचीनकालादेव सर्वेषां सम्मतं दृष्टमित्यलमत्राप्रासङ्गिकविस्तरेण।

**सांख्यदर्शने**—सांख्यास्तु बुद्धितत्त्वात् चित्तात् मनसो भिन्नत्वमाहुः। प्रधानात् जगत्कारणात् बुद्धिर्महत्तत्त्वम्। बुद्धेरहङ्कारः, सात्त्विकादहङ्कारादुत्पन्नमान्तरमेकादशकमिन्द्रियमेव मनः। "अध्यवसायो बुद्धि"रिति सांख्यसूत्रे बुद्धिलक्षणम्, "कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशक" मिति इन्द्रियत्रैविध्यम्। तत्र "उभयात्मकं मन" इति मनसः कर्मेन्द्रिय-ज्ञानेन्द्रियोभय-प्रवृत्त्योरधिष्ठानादुभयात्मकत्वमाह। बुद्धेरध्यवसायः, अहंकारस्य अभिमानः, मनसः सङ्कल्प इति च "त्रयाणां स्वालक्षण्यम्", त्रयाणामेव च अन्तःकरणत्वम्।

तत्र बुद्धेरेव मूलत्वात् "तथा शेषसंस्काराधारत्वात्" साक्षात् पुरुषार्थ-कारित्वाच्च "बुद्धेः प्राधान्यम्"। सुखदुःखादीनां धर्माधर्मादीनाञ्च बुद्धिधर्मत्वम्।

सुखादीनां बुद्धिधर्मत्वेऽपि मानसप्रत्यक्षगम्यत्वमेव। बुद्धेः प्रकृति-जन्यत्वात् परिच्छिन्नत्वमनित्यत्वञ्च। मनसोऽपि तथा बोद्धव्यम्। "न व्यापकत्वं मनसः कारणत्वा" दित्यादि सूत्रम्। इन्द्रियेण आलोचनं नाम निर्विकल्पकवृत्तिविशेषो जायते। मनस्तु अयं घट इत्याद्याकारकं संकल्पं करोति, अहंकारश्च ममेदम् अनुकूलं प्रतिकूलं वा इत्यभिमन्यते, बुद्धिस्तु 'ममेदं ग्राह्य' मिति निश्चिनोतीति तेषां व्यापारभेदः।

"न निर्भागत्वं तद्योगाद्" इति सूत्रेण प्रधानजन्यत्वात् अनित्य-त्वादपि बुद्धिमनसोर्न विभुत्वमणुत्वं वा। बुद्धेस्तु ज्ञानात्मिका वृत्तयः पञ्चतय्यः—"प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः"। बुद्धे-र्विषयाकारपरिणामात्मकवृत्तिरेव ज्ञानम्। आभिमानिकः पौरुषेय-बोधः फलम्। ज्ञानन्तु साक्षिपुरुषग्राह्यमिति न अनुव्यवसायगम्यं प्राकट्यानुमेयं वा। सुखदुःखादयोऽपि बुद्धिवृत्तयो ज्ञानकृत्याद्याश्रय-त्वात् निष्क्रियपुरुषार्थकारित्वाच्च। अन्तःकरणान्तर्गतत्वेऽपि बुद्धेरेव कर्तृत्वम्। "समानकर्मयोगे बुद्धेः प्राधान्य" मिति सूत्रमुक्तम्। ईश्वरकृष्णकारिकायामपि—'कृत्स्नं पुरुषार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति' "तस्मात्तत् संयोगादचेतनं चेतनावदिव लिङ्गम्" इत्यादि।

तथा च, मनसो बुद्धेश्च जडत्वं परिच्छिन्नत्वमनित्यत्वञ्च सांख्यानामभिमतम्। तत्र मनसोऽन्तरिन्द्रियमात्रत्वं, बुद्धेस्तु परिणा-मित्वात् ज्ञान-सुख-धर्म-संस्काराद्यशेषविशेषवत्त्वात् चिच्छाया-योगाच्च कर्तृत्वादिकमपीति विशेषः।

अपि च, त्रिगुणात्मकप्रधानजन्यत्वाद् बुद्धिरपि सत्त्वरजस्तम-स्त्रिगुणात्मिका। सत्त्वगुणो ज्ञानसुखाद्युपादानभूतो द्रव्यविशेषः। रजोगुणस्तु क्रियारागाद्युपादानभूतो द्रव्यविशेषः। त्रिगुणात्मकत्वेऽपि सत्त्वप्रधानत्वाद् बुद्धिः सत्त्वमित्यपि व्यपदिश्यते। महदादि सर्वेषामेव तत्त्वानां त्रिगुणात्मकत्वं कारणगुणान्वयक्रमादिति दिक्।

[क्रमशः]

# दरिद्रनारायणः

रामप्रतापः*

[ १ ]

जनैः शून्ये क्षेत्रे कृशतनुरथो चिन्तनपरो
निराशो निष्कामः सकलविषयेभ्योऽप्युपरतः ।
नितान्तं ताटस्थ्यं भजति जगतो भूरिविभवे,
सखे कोऽयं दिव्यो यतिवर इवाग्रे स्थिरमतिः ।।१।।

जनानां कल्याणे निरत इयताऽप्यस्य गणना
न नेतृणां मध्ये न च हलधरः सन्नपि हली ।
अयं कर्ता भर्ता क्षुधि भवति हर्ता च जगतः
परं चित्रं यन्न त्रिषु परमदेवेषु गणितः ।।२।।

लुठत्कुड्ये गेहे विदलितमना भग्नहृदया
व्रतैः कङ्कालत्वं बत गतवतीयं प्रियतमा ।
बुभुक्षार्तः पुत्रः शठ इव विषुप्तः क्षितितले
निशीथे शीतेन क्वणितदशनेनापि निहताः ।।३।।

निरन्नो लोकेऽन्नं वितरति गुरुः सन्नपि लघुः
स्वयं शोषं गच्छन्निखिलजनपोषं प्रकुरुते ।
सखे क्षेत्राऽऽजीवः परममहिमा भारतभुवो
दरिद्रोऽयं कामं नरि वसति नारायण इह ।।४।।

[ २ ]

पुरः कर्मागारे विकलतरचेता ऋजुमतिः
परेषामन्यायं विनतिनतमूर्धा विषहते ।
परार्थे यस्येदं लघु गतवयो जीवितमहो
सखे कोऽसावग्रे व्यथित इह मूकः पशुरिव ।।५।।

---

*विद्यालङ्कारः, एम. ए., पीएच्. डी.; प्राध्यापकः वि. वैदिक-शोध-संस्थानम् ।

श्रमं नित्यं कुर्वन्न हि फलमसौ जातु लभते
प्रयच्छन् वस्त्रादीन्यपि न खलु लोके पृथुयशाः।
जनेभ्यो दत्त्वार्थं भवति न स दातेति विदितो
दिशं वासो धत्ते न तु जिनमुनिर्नापि च शिवः ॥६॥

इदं वासस्थानं रविपवनसञ्चाररहितं
तथा चाग्रे जाया शमितहसना पाण्डुरमुखी।
शिशुः खट्वाक्षिप्तो विलपतितमां रोगविकलो
लुलद्देहं गेहं परमयमहो कर्मणि रतः ॥७॥

बहुव्याधिः साधीनहरहरुपाधीननुभवन्
समस्तार्थैः शून्यो जनयति, स भुङ्क्ते न विभवान्।
परायत्तो ग्रस्तः श्रमिक इति शस्तोऽर्थपतिभिः
सुखाधारो नारायण उदयसारो नरतनुः ॥८॥

यान्त्येके विपिनं विचेतुमनसः कश्चित्तु नारायणं
कश्चित्पूजयते च मन्दिरगतं स्थाणुं शिवं सर्वथा।
दारिद्र्यार्दित इत्यवेत्य मनुजं त्वेनं तिरस्कृत्य ते
न स्वर्गं न च सत्कुलेषु जननं लब्धुं समर्थाः क्वचित् ॥९॥

---

## दारिद्र्याभिशापः

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः सत्त्वात्परिभ्रश्यते
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते
निर्बुद्धः क्षयमेत्यहो ! निधनता सर्वापदामास्पदम् ॥

(पञ्चतन्त्रात्)

# धर्मसूत्राणां श्रुतिमूलत्वम्

रामगोपालः*

इदानीन्तनहिन्दुसमुदाचारविषये प्रमाणत्वेन गृह्यमाणानि मनुस्मृतिप्रभृतीनि पद्योपनिबद्धानि धर्मशास्त्राणि खलु प्राचीनतराणि कल्पसूत्राणि भृशमुपजीवन्तीति सुविदितमेव संस्कृतवाङ्मयविकासविदां विदुषाम् ।

महाभारते (१३, ६६, १२) चापि शङ्खलिखितगौतमापस्तम्बादीनां धर्मसूत्रकाराणां नामानि सप्रश्रयं स्मर्यन्ते । कस्यचित् (धर्म-) सूत्रकारस्य मतमुदाहरन् व्यासः प्राह—

"अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति ।
यदानृताः स्त्रियस्तात सहधर्मः कुतः स्मृतः ॥"

(महा० १३, १६, ६)

एवं धर्मसूत्राणि संस्कृतवाङ्मये विशिष्टां पदवीमधितिष्ठन्ति समादरं च भजन्ते ।

कालक्रमेण धर्मसूत्रस्थानां केषांचन धर्माणां जनाग्राह्यत्वे जातेऽपि, धर्मसूत्रवचसां समादरोऽद्याप्यक्षुण्ण एव । कालेन सदाचारधर्माः परिवर्तन्ते नूतनधर्माश्चोद्भवन्तीति विषये न कस्यापि विप्रतिपत्तिः । धर्मसूत्रेषु प्रतिपादिता भूयांसो धर्मास्तु अद्यत्वेऽपि हिन्दुसमाजेन तथैव स्वीक्रियन्ते । अतिप्राचीने कालेऽप्यार्यास्तान् धर्मान् अन्वसरन् । एते सर्वे धर्माश्च सूत्रकारैर्न स्वयं प्रकल्पिताः, अपितु प्रायेण प्राक्तनेभ्यः स्रोतोभ्यः संगृह्य यथामति यथाकालं च व्याख्याताः । यथा च बौधायनः प्राह—"उपदिष्टो धर्मः प्रतिवेदम् । तस्यानुव्याख्यास्यामः" (बौ. ध. सू. १, १, १–२) । एतदेव मतमनुसरन्नापस्तम्बो व्याचष्टे—"अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामः" (आप. ध. सू. १, १, १, १) । इत्थं धर्मसूत्राणि प्राक्तनानामेव धर्माणां व्याख्यानरूपाणि । सर्वे सूत्रकाराः स्मृतिकाराश्च वेदमेव धर्मस्यादिमं मूलं मन्यन्ते ।

* एम. ए., पीएच. डी., रीडर, संस्कृत-विभागः, पञ्जाबविश्वविद्यालयः ।

परन्तु ये धर्माः प्रत्यक्षरूपेण वेदे नोपलभ्यन्ते तेषां मूलं वेदविदां स्मृतौ शीले चान्विष्यते[१]। उपरिष्टादस्य विषयस्य सविस्तरं विवेचनं करिष्यामः।

धर्मसूत्रकारैर्मन्त्रब्राह्मणात्मको वेदः प्रमाणत्वेनाङ्गीकृतः। अतएव ते बहुधा मन्त्रैः सह ब्राह्मणवाक्यान्यपि श्रुतिवचनेनोदाहरन्ति। काश्चिद् वैदिक्यो गाथा अपि सूत्रेषु संगृह्यन्ते। अस्तु, यान्धर्मानधिकृत्य सूत्रकारैः श्रुतिवचांसि संगृहीतानि तेषां दिङ्मात्रमिह प्रदर्श्यते।

## उपनयनं ब्रह्मचारिधर्माश्च—

शतपथब्राह्मणेन (११, ३, ३; ११, ५, ४)। प्रोक्ता ब्रह्मचारिधर्मा अनेकैः सूत्रकारैरुद्धृता अनुसृताश्चेत्ययं विषयो मयान्यस्मिन् निबन्धे विस्तरेण विचारितः[२]। आपस्तम्बीयधर्मसूत्र उद्धृतैर्ब्राह्मणवाक्यैर्ज्ञायते यच्छतपथब्राह्मणाद् भिन्नेष्वपि ब्राह्मणेषु ब्रह्मचारिधर्मा विहिताः परन्तु साम्प्रतं तानि ब्राह्मणानि नोपलभ्यन्ते। यथा चापस्तम्बेनोद्धृते एते ब्राह्मणवचसी इदानीं कस्मिन्नपि ब्राह्मणे नोपलभ्येते—"यदि स्मयेतापि गृह्य स्मयेतेति ब्राह्मणम्" (आ० ध० सू० १, २, ७, ७)। 'रजस्वलो रक्तदन्सत्यवादी स्यादिति हि ब्राह्मणम्" (आ० ध० सू० १, २, ७, ११)। शतपथब्राह्मणस्य (११, ३, ३, १) ब्रह्मचारिधर्मविषयकं वाक्यं बौधायनधर्मसूत्र (१, ४, ४) उदाह्रियते।

---

१. गौ० ध० सू० १, १–२ वेदो धर्ममूलम्। तद्विदां च स्मृतिशीले।
वा० ध० सू० १, ४–५—श्रुतिस्मृतिविहितो धर्मः। तदलाभे शिष्टाचारः प्रमाणम्।
आप० ध० सू० १, १, १, २–३—धर्मज्ञसमयः प्रमाणम्। वेदाश्च।
बौ० ध० सू० १, १, ३–४—स्मार्तो द्वितीयः। तृतीयश्शिष्टागमः।
मनु० २, ६—वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥
या० १, ७—श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्॥

२. द्र०—Vishveshvaranand Indological Journal, Vol. I, Part ii, pp. 291—298—"Influence of the Brāhmaṇa-s on the Gṛhya Sutra-s,"

कस्याप्युत्सन्नब्राह्मणस्य वाक्यद्वयमुपनयनविधायकमपि खल्वापस्तम्बेनैवम् उद्ध्रियते—"सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्। तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम्" (आप० ध० सू० १, १, १, १०–११)।

स्नातकधर्माः—

स्नातकधर्मपराणि श्रुतिवचनानि न धर्मसूत्रैरुदाह्रियन्ते। यथा हि शतपथब्राह्मणमतमुदाहरन् वसिष्ठः प्राह—"भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते" (वा० ध० सू० १२, ३१)[३]। अपरस्य स्नातकधर्मस्य विषये वसिष्ठः काठकश्रुतिं स्मारयति पाठकान्[४]। स्नातकः सत्रादन्यत्र शिखां न वापयेदिति धर्मं व्याचक्षाण आपस्तम्बः श्रुतिमुदाहरति—"अथापि ब्राह्मणम्। रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति। सत्रेषु तु वचनाद्वपनं शिखायाः"[५]।

वर्णधर्माः—

यदपि वर्णशब्द ऋग्वेदे जातिं नाभिधत्ते, तदपि मन्त्रेऽस्मिन् चत्वारो वर्णा अभिधीयन्ते—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥"

(ऋ० १०, ९०, १२)

श्रुतावन्यत्रापि वर्णविषयकोऽयं मन्त्रो दृश्यते[६]। काठकसंहितायां वर्णशब्दः स्पष्टमेव जातिमाचष्टे। यथा च काठकसंहितायां (३४, ५) श्रूयते—"आर्यं वर्णमुज्जापयति।" ब्राह्मणेषु तु स वर्णार्थे एव प्रयुक्तः। शतपथब्राह्मणं हि (५ ५, ४, ९) वर्णानेवं

३. तु०-श० ब्रा० १०, ५, २, ९—तस्माज्जायाया अन्ते नाश्नीयाद्वीर्यवान् हास्माज्जायते।
मनु० ४, ४३—नाश्नीयाद् भार्यया सार्धं नैनामीक्षेत चाश्नतीम्।

४. वा० ध० सू० १२, २४; तु०—तै० सं० २, ५, १, ५; या० १, ८१।

५. आप० ध० सू० १, ३, १०, ८–९; सत्रेषु शिखावपनविषये द्र० श० ब्रा० २, ६, ३, १४–१७।

६. अ० १९, ६; ६; वा० सं० ३१, ११; तै० आ० ३, १२, ५।

वर्णयति—"चत्वारो वै वर्णाः। ब्राह्मणो राजन्यो वैश्यः शूद्रः।" ऐतरेयब्राह्मणे (८, ४) च "शौद्रो वर्णः" इति प्रयोग उपलभ्यते। तैत्तिरीयब्राह्मणम् (१, २, ६, ७) अस्मिन् विषये प्राह—"दैव्यो वै वर्णो ब्राह्मणः।" "आर्यं वर्णमुज्जापयन्ति" इत्येष प्रयोगः पञ्चविंश-ब्राह्मणे (५, ५, १७) दृश्यते।

एतादृशानि श्रुतिवाक्यान्यवष्टभ्य धर्मसूत्रकारा वर्णधर्मान् व्याचक्षते। वसिष्ठस्तु साक्षादेव वर्णविषयकं मन्त्रमुदाहरति—"प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च। ब्राह्मणोऽस्य मुख-मासीद् बाहू राजन्यः कृतः। उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत इत्यपि निगमो भवति[७]।" अन्ये सूत्रकाराः शतपथब्राह्मण-मनुसृत्य वर्णान् परिगणयन्ति[८]। यथा धर्मसूत्रेषु वर्णानां कर्मणां वर्णनं क्रियते तथा श्रुतावेषां कर्मणां स्पष्टं विधानं तु न दृश्यते। परन्तु चतुर्णां वर्णानां कर्मणां पृथक्त्वं श्रुतावनेकधा दरीदृश्यते। अपि च केषुचित् कर्मसु वर्णविशेषस्यैवाधिकारः श्रूयते। यथा च ब्राह्मणवर्णस्य याजनाधिकारं प्रतिपादयच्छतपथब्राह्मणं (१३, ४, १, ३) प्राह—"य उ वैकश्च यजते ब्राह्मणीभूयेवैव यजते।" ब्राह्मणानां याजनाधिकारो मैत्रायणीसंहितायाम् (१, ४, ६) एवं श्रूयते—"द्वया वै देवा यजमा-नस्य गृहमागच्छन्ति सोमपा अन्येऽसोमपा अन्ये, एते वै देवा अहु-तादो यद् ब्राह्मणाः।" ब्राह्मणेष्वपीदृशं वचनं दृश्यते[९]। दानप्रतिग्रहणे सोमपाने च ब्राह्मणानामधिकारं विदधानम् ऐतरेयब्राह्मणमाचष्टे यद् यस्य क्षत्रियस्य पापं भवति तस्य संततौ ब्राह्मणसदृशः पुत्रो जनिष्यते यः दानं प्रतिग्रहीष्यति सोमं च पास्यति[१०]। आर्त्विज्ये

---

७. वा० ध० सू० ४, १–२; तु० मनु० १, ३१.८७; १०, ४.४५; या० १, १०।

८. बौ० ध० सू० १, १६, १—चत्वारो वर्णा ब्राह्मणक्षत्रियविट्शूद्राः। आप० ध० सू० १, १, १, ४—चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः। गौ० ध० सू० १०, १—५०।

९. ऐ० ब्रा० ७, १६—एता वै प्रजा हुतादो यद् ब्राह्मणाः। गो० ब्रा० २, १, ६—एते वै देवा अहुतादो यद् ब्राह्मणाः।

१०. ऐ० ब्रा० ७, २६—स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथा-

ब्राह्मणेतरवर्णानामधिकारः श्रुतौ कुत्रापि न श्रूयते। ब्राह्मणस्याधिकाराः कर्माणि च शतपथब्राह्मणे (११, ५, ७, १) एवं विधीयन्ते- "प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति—ब्राह्मण्यम् प्रतिरूपचर्या यशो लोकपक्तिम्; लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मण भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च"[११]। शतपथब्राह्मणस्यापरं वचनमपि ज्ञापयति यत्तदानीमध्यापने ब्राह्मणस्यैवाधिकार आसीत्[१२]। ईदृशानि श्रुतिवाक्यान्याश्रित्य धर्मसूत्रकारा ब्राह्मणधर्मानेवं व्याचक्षते—

"द्विजातीनामध्ययनमिज्या दानम्। ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः।" (गौ० ध० सू० १०, १–२) "ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै।" (बौ० ध० सू० १, १८, २)

"स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः" (आप० ध० सू० २, ५, १०, ४)। "षट् कर्माणि ब्राह्मणस्य। स्वाध्यायाध्ययनमध्यापनं यज्ञो यजनं दानं प्रतिग्रहश्चेति" (वा० ध० सू० २, १३–१४)[१३]। उपरिनिर्दिष्टं (श० ब्रा०) श्रुतिविधानमनुसृत्य धर्मसूत्रकारा ब्राह्मणस्यावध्यत्वमाचक्षते। यथा च बौधायनः प्रब्रूते—"अवध्यो वै ब्राह्मणस्सर्वापराधेषु"[१४]।

---

कामप्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः स ब्रह्मबन्धवेन जिज्यूषितः।

११. कतिपये पाश्चात्यमनीषिणो मन्यन्ते यदत्र "लोकपक्तिरध्यापनेन लोकस्य पूर्णत्वम्" (perfection) इत्यभिधत्ते; द्र० Vedic Index II, 82. सायणस्त्वित्थं व्याचष्टे—"तद्युक्तो यो लोकस्तस्य पक्तिः परिपाको भवति।"

१२. श० ब्रा० १४, ५, १, १५—स होवाचाजातशत्रुः प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति। बृ० उ० २, १, १५।

१३. तु०—मनु० १०, ७५; या० १, ११८।

१४. बौ० ध० सू० १, १८, १७; तु०—गौ० ध० सू० ८, १३—अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिहार्यश्चेति।
मनु० ८, ३८०—न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्।

यद्यपि कतिपयेषु यज्ञेषु वर्णविशेषस्याधिकारो विधीयते श्रुत्या, तथापि प्रायेण सर्वेषां द्विजानाम् (ब्राह्मणक्षत्रियवैश्यानाम्) अध्ययने यज्ञे च समानोऽधिकारः श्रूयते। श्रुतौ क्वचिद् आर्यशब्दोऽपि द्विजान् अभिधत्ते। एवं सूत्रकारा अपि द्विजेभ्य आर्यशब्दं प्रयुञ्जते, इज्याध्ययनदानानि च तेभ्यो निर्विशेषं विदधति[१५]।

## क्षत्रियधर्माः—

क्षत्रियस्य प्रजापालनमेव प्रधानो धर्म उच्यते। यथा वसिष्ठः प्राह—'शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत्[१६]।" क्षत्रियधर्मस्य मूलं स्पष्टमेव श्रुतौ दरीदृश्यते। अत्र विषय ऐतरेयब्राह्मणे (८, १७) वचनमिदमुपलभ्यते—"क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजन्यमित्राणां हन्ताऽजनि ब्राह्मणानां गोप्ताऽजनीति।" शतपथब्राह्मणम् (५, १, ५, १४) अपि क्षत्रियस्य प्रधानं धर्म वर्णयद् ब्रूते—"एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः सन् बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यः।" अन्यत्र (८, २, ३, ११) चोच्यते ब्राह्मणेऽस्मिन्—"प्रजापतिर्वै क्षत्रम्।" काठकश्रुतिः (२८, १) मतमेतद् द्रढयति—'राजन्यो वै प्रजानामधिपतिः।" राजसम्मानमधिकृत्य गौतमः प्रचष्टे—"तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः। तेऽप्येनं मन्येरन्[१७]।" अस्य धर्मस्य मूलं श्रुतावुपलभ्यते। यथा च शतपथब्राह्मणे (२, ५, २,६) विधीयते—"तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते।"

## वैश्यधर्माः—

पशवो वैश्यस्य धनमिति श्रुतौ भृशं श्रूयते। यथा च पञ्चविंशब्राह्मणे (१८, ४, ६) वचनमिदं लभ्यते—"एतद्वै वैश्यस्य समृद्धं यत्

---

१५. गौ० ध० सू० १०, १; बौ० ध० सू० १, १ने, २–४; आप० ध० सू० २, ५, १०, ४–७; वा० ध० सू० २, १४–१८; मनु० १०, ७५–७८; या० १, ११८।

१६. वा० ध० सू० २, १७; तु०—गौ० ध० सू० १०, ७—राज्ञोऽधिकं रक्षणं सर्वभूतानाम्।
बौ० ध० सू० १, १८, ३; आ० ध० सू० २, ५, १०, ६; मनु० १०, ७९; या० १, ११९—प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।

१७. गौ० ध० सू० ११, ७–८।

पशवः।" अन्यत्र (६, १, १०) चापि ब्राह्मणेऽस्मिन्नेवमुच्यते—"तस्माद् बहुपशुर्वैश्वदेवो हि जागतो (वैश्यः) वर्षा ह्यस्य वैश्यस्य ऋतुस्तस्माद् ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्टः।" पशु-शब्दः कृषेरप्युपलक्षणमस्ति। अत एवैतादृशीं श्रुतिमनुसृत्य सूत्रकाराः पशुपालनं कृषिं च वैश्यस्य प्रधानं धर्मं प्रचक्षते[१८]। तत्सम्बन्धाद् वाणिज्यमपि वैश्यधर्मत्वेन गृह्यते।

**शूद्रधर्माः—**

ऋग्वेदे (१०, ६०, १२) शूद्रशब्दः सकृत् प्रयुज्यते। तत्र शूद्रस्य धर्माणां कोऽपि संकेतो न दृश्यते, पद्भ्यामस्य जन्म तु खलूच्यते। अन्यवेदेषु ब्राह्मणेषु च शूद्रशब्दोऽसकृत् प्रयुक्तः। तत्रास्य कर्मणां परिचयोऽपि लभ्यते। पञ्चविंशब्राह्मणे श्रूयते यत् पादप्रक्षालनं शूद्रस्य कर्मास्ति यज्ञे चास्याधिकारो न विद्यते—"स यत्त एव प्रतिष्ठाया एकविंशमसृजत तमनुष्टुप्छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यस्तस्माच्छूद्र उत बहुपशुरयज्ञियो विदेवो हि, न हि तं काचन देवताऽन्वसृज्यत तस्मात्पादावनेजयन्नाति वर्द्धते पत्तो हि सृष्टः"[१९]। एवमैतरेयब्राह्मणमपि मन्यते यच्छूद्रोऽन्यस्य (वर्णस्य) परिचरो भवति[२०]। ईदृशानि श्रुतिवचनान्यनुसरन्तो धर्मसूत्रकाराः परिचर्यामेव प्रधानं शूद्रधर्मं मन्यन्ते। यथा चाह बौधायनः—"शूद्रेषु

---

१८. आप० ध० सू० २, ५, १०, ७—क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगौरक्ष्यवाणिज्याधिकम्।

बौ० ध० सू० १, १८, ४—विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्धये।

गौ० ध० सू० १०, ५०—वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यकुसीदम्।

वा० ध० सू० २, १६—कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं च।

तु०—मनु० १०, ७६—शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः।

या० १, ११६— कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्॥

१९. पं० ब्रा० ६, १, ११।

२०. ऐ० ब्रा० ७, २६—अथ यच्चपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यः (ताडच इति सायणभाष्यम्)।

पूर्वेषां परिचर्या"[२१]। तथैव गौतमः प्रब्रूते—"परिचर्या चोत्तरेषाम्"[२२]।

आश्रमधर्माः—

ब्रह्मचारिधर्मविषयकाणि बहूनि वचनानि श्रुतावुपलभ्यन्ते। शतपथब्राह्मणे (११, ५, ४) ब्रह्मचारिधर्माणां विशदं वर्णनं विद्यते। विषयोऽयं पूर्वमेवास्माभिर्विचारितः। तथैव स्नातकधर्माणां विवेचनमपि कृतम्। इदानीं गार्हस्थ्यमधिकृत्य किञ्चिद् विमृश्यते। उद्वाहविषये श्रुतौ प्रभूतं मन्त्रजातं दृश्यते। ऋग्वेदस्य दशमे मण्डले पञ्चाशीतितमं सूक्तं सूर्याविवाहवर्णनव्याजेन तदानीन्तनस्य विवाहस्य समीचीनं वर्णनमुपन्यस्यति। अथर्ववेदस्य चतुर्दशं काण्डमपि विषयमिमं प्रतिपादयति। गृह्यसूत्राणां विवाहवर्णन एतेषां मन्त्राणां विनियोगो विधीयते। उद्वाहविषयका वेदमन्त्रा एवाचार्यैर्गृहस्थाश्रमविषये प्रमाणत्वेन गृह्यन्ते[२३]। ऋणत्रयविधानेन[२४] श्रुतिर्गार्हस्थ्यं ब्रह्मचर्यं च विधत्त इति सूत्रकाराः स्मृतिकाराश्च मन्यन्ते। यथा च बौधायनः श्रुतिमिमां व्याचष्टे—"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति। एवमृणसंयोगादीन्यसंख्येयानि भवन्ति"[२५]। एतादृशानि श्रुतिवचनान्याश्रित्य धर्मसूत्रकारा गार्हस्थ्यं तद्धर्मांश्च व्याचक्षते। तैत्तिरीयसंहितायां (२, ५, १) विहिता ऋतुमतीधर्माः सूत्रकारैः संगृह्य व्याख्यायन्ते श्रुतिश्चोदाह्रियते विषयेऽस्मिन्[२६]।

---

२१. बौ० ध० सू० १, १८, ५।

२२. गौ० ध० सू० १०, ५७; तु०—वा० ध० सू० २, २०—तेषां परिचर्या शूद्रस्य नियता च वृत्तिः। मनु० १,९१; या० १, १२०।

२३. मनु० ८, २२७—पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥
तु०—महा० १३, ४४. ५५।

२४. ऋ० ६, ११७, ३; श० ब्रा० १, ७, २, १; तै० सं० ६, ३, १०, ५; तै० ब्रा० ३, ७, ९, ८।

२५. बौ० ध० सू० २, ११, ३६; तु०—वा० ध० सू० ११, ४८; आ० ध० सू० २, ९, २४, ८; मनु० ४, २५७; ६, ३५–३७; ११, ६६।

२६. बौ० ध० सू० १, ११, ३२–३३; वा० ५, ६–९।

यद्यपि धर्मसूत्रकारा वानप्रस्थं संन्यासं च वर्णयन्ति, तथाप्यनयोराश्रमयोर्विषये सूत्रकाराणां विप्रतिपत्तिरासीत्। केचनाचार्या नैष्ठिकब्रह्मचर्यं वानप्रस्थं संन्यासं च नान्वमन्यन्त। अतएव बौधायनः प्राह—"ऐकाश्रम्यं त्वाचार्या अप्रजनत्वादितरेषाम्। तत्रोदाहरन्ति—प्राह्लादिर्ह वै कपिलो नामाऽसुर आस। स एतान्भेदांश्चकार देवैस्सह स्पर्धमानस्तान् मनीषी नाऽऽद्रियेत"[२७]। केचनाचार्या अमन्यन्त यद् "ये चत्वारः" इति (तै० सं० ५, ७, २, ३) श्रुतिर्धर्मस्य चतुर्धा भेदं (आश्रमभेदतः) करोति। तेषां मतं प्रत्याचक्षाणो बौधायनो व्याचष्टे यद् 'ये चत्वारः" इत्येष कर्मवाद (कर्मभेदः) एवास्ति—ऐष्टिकपाशुकसौमिकदार्वीहोमाणाम्[२८]। य आचार्याः संन्यासं समर्थयन्ते स्म ते ज्ञानमेव मुक्तेः कारणं मन्यमाना ज्ञानप्रशंसात्मकानि श्रुतिवचनानि प्रमाणत्वेनोदाहरन्ति स्म[२९]। शतपथब्राह्मणस्य (१४, ७, २, २५–२६) वचनमिदं तेषामाचार्याणां मतं द्रढयति—"तमेतं वेदानुवचनेन विविदिषन्ति। ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजान्न कामयन्ते किम्प्रजया करिष्यामो येषान्नोयमात्मायँल्लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः"[३०]। आपस्तम्बीयधर्मसूत्रेऽपि पक्षद्वयमुपन्यस्तम्।

प्रव्रज्यायाः समर्थनं कुर्वाणाः केचनाचार्याः पुराणश्लोकावुद्धृत्य संकल्पसिद्धिं च स्तुत्वैवं प्रचक्षते स्म—"अथापि संकल्पसिद्धयो

---

२७. बौ० ध० सू० २, ११, २६–३०; तु० गौ० ध० सू० ३, ३६—ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थस्य। आसुरप्राह्लादिविषये द्र० अ० ८, १०, २२; तै० ब्रा० १, ५, ६, १; १, ५, १०, ७।

२८. बौ० ध० सू० २, ११, ११.१२.१३.३१।

२९. द्र०—बौ० ध० सू० २, ११, ३३–३५; तु०—तै० ब्रा० ३, १२, ६, ७; श०ब्रा० १४, ७, २, २८; बृ० उप०, ४, ४, २३; ऋ० १०, ७१, ६।

३०. तु० बृ० उप० ४, ४, २२।

भवन्ति। यथा वर्षं प्रजादानं दूरे दर्शनं मनोजवता यच्चान्यदेव युक्तम्। तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते"[३१]।

एवमेव मुनिधर्मविषयेऽपि तदानीं विप्रतिपत्तिरासीत्। केचनाचार्या अमन्यन्त यद् आत्मनि ज्ञाते परिव्राजको मोक्षमश्नुते, ततस्तस्य सर्वत एव विधितो निषेधतश्च मोक्षो भवति। किमपि तस्य कृत्यमकृत्यं वा नास्ति। स नग्नोऽपि चरितुमर्हति[३२]। इदं मतं प्रत्याचक्षाण आपस्तम्बः प्राह—"तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत"[३३]। यद्यपि सूत्रकाराः स्मृतिकाराश्च कालधर्ममवेक्षमाणाः संन्यासं न सर्वथा प्रत्याचक्षते संन्यासधर्मांश्चापि वर्णयन्ति, तथापि ते वेदानां परित्यागं वेदैर्विरुद्धमाचरणं च नैवानुमन्यन्ते। अतएवापस्तम्बीयधर्मसूत्रे (२, ६, २३, १०) स्पष्टमभिधीयते—"त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति ते विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते।" एवमेव वसिष्ठः प्राह—"संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत्। वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेत्"[३४]। एतदेव धर्मसूत्रकाराणां वैलक्षण्यं यद् ये परिव्राजकाः सर्वान्धर्मान् लोकसम्बन्धांश्च परित्यज्य प्रव्रजन्ति तानपि ते वैदिकधर्ममर्यादासु नियन्तुं प्रयतन्ते।

### दायभागः—

धर्मसूत्रकारा दायभागपरां श्रुतिमुदाहृत्य दायभागधर्माणां श्रुतिमूलत्वमुपपादयन्ति। पितैव पुत्रेभ्यो दायं विभक्तुमर्हतीति सिद्धान्तं निश्चेतुं बौधायनः श्रुतिवचनमुपन्यस्यति[३५]। पिता पुत्रेभ्य एव दायं

३१. आप० ध० सू० २, ६, २३, ७–९।

३२. आप० ध० सू० २, ६, २१, १२–१४—सर्वतः परिमोक्षमेके। सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्। बुद्धे क्षेमप्रापणम्।

३३. आप० ध० सू० २, ६, २१, १५–१६।

३४. वा० ध० सू० १०, ४; तु०—मनु० ६, ५–१५, ८६; या० ३, ५६; श्रीमद्भगवद्गीतायाम् १८, १–७।

३५. बौ० ध० सू० २, ३, २—"मनुः पुत्रेभ्यो दायं व्यभज"दिति श्रुतिः। इदं श्रुतिवचनं तैत्तिरीयसंहितायाम् (३, १, ९, ४) उपलभ्यते।

विभजेन्मनु दुहितृभ्य इत्येतदप्यस्माच्छ्रुतिवचनादायातीति सूत्रव्याख्यातारो मन्यन्ते[३६]।

बौधायनः स्पष्टमेवाभिधत्ते यत्पितरि जीवति पितुरनुज्ञयैव दायविभागः स्यात्[३७]। ज्येष्ठः पुत्रोऽधिकं दायं लभेतेति केचनाचार्या मन्यन्ते स्म[३८]। एतन्मतं द्रढयितुं बौधायनः श्रुतिवचनमुदाहरति—"तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीति श्रुतिः"[३९]। कतिपय आचार्या अमन्यन्त यज्ज्येष्ठः पुत्र एकलः सर्वं दायादं हरेत्[४०]। मतमेतत्प्रत्याचक्षाण आपस्तम्बो मनुते यदेतादृशं विभाजनं शास्त्रैः (वेदैः) विप्रतिषिद्धमस्ति। अतएव सर्वे पुत्राः समं दायं विभजेरन्[४१]। समदायविभागस्य श्रुतिमूलत्वं दर्शयन् आपस्तम्बस्तदेव श्रुतिवचनमुदाहरति यद् बौधायनेन प्रयोजनान्तर उदाहृतम्—"मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते"[४२]। बौधायनोदाहृतस्य श्रुतिवचनस्य (द्र० टि० ४४) विधित्वममन्यमान आपस्तम्बो न्यायविदां मतमुपन्यस्यति—"अथापि नित्यानुवादमविधिमाहुर्न्यायविदः"[४३]। अस्य व्याख्यानस्यायमभिप्रायो यदेतादृशानि श्रुतिवाक्यानि दृष्टार्थमात्रमनुवदन्ति न विदधति। अस्माद्विवेचनात् स्पष्टमेवेदमायाति यद् धर्मसूत्रकाराः श्रुतिवाक्यानि व्याख्याय धर्मं प्रतिपादयन्ति।

अनेकानि श्रुतिवचनानि प्रचक्षते यत् स्त्रियो दायं न भजन्ते[४४]। सूत्रकाराः प्रायेण मतमेतदनुसरन्ति। बौधायनधर्मसूत्रे (२, ३, ४७)

---

३६. बौ० ध० सू० २, ३, २—गोविन्दस्वामी—"पुत्रग्रहणात्पुंस एव विभजेत् न दुहितॄः।"

३७. बौ० ध० सू० २, ३, ८; तु०—आप० ध० सू० २, ६, १४, १।

३८. बौ० ध० सू० २, ३, ४; गौ० ध० सू० २८, १४; वा० ध० सू० १७, ४२-४३; मनु० ६, ११७।

३९. बौ० ध० सू० २, ३, ५; द्र०—तै० सं० २, ५, २, ७।

४०. आप० ध० सू० २, ६, १४, ६; गौ० ध० सू० २८,३; मनु० ६,१०५।

४१. आप० ध० सू० २, ६, १४, १.१०.१४; तु०—या० २, ११७।

४२. आप० ध० सू० २, ६, १४, ११; द्र०—टि० ४०।

४३. आप० ध० सू० २, ६, १४, १३।

४४. मै० सं० ४, ४, ६—तस्मात्पुमान्दायादः स्त्र्यदायादा।
तै० सं० ६, ५, ८, २—तस्मात्स्त्रियो निरिन्द्रिया अदायादीः।

दायविभागपरा श्रुतिरुदाह्रियते (द्र० टि० ४६—तै० सं०)। परन्तु मतैक्यमत्र न विद्यते। गौतममते पत्नी सपिण्डादिभिः सह रिक्थं भजते[४५]। आपस्तम्बमते दुहिताऽपि विकल्पेन दायं लभते[४६]। श्रुतिव्याख्यानभेदादेव दायविभागपरो भेदः संजात इति मन्यामहे। यथा च यास्कः प्राह—"अथैतां दुहितृदायाद्य उदाहरन्ति। पुत्रदायाद्य इत्येके"[४७]।

## प्रलीनशाखामूला धर्माः—

वेदविदां स्मृतिः शीलञ्च केषांचन धर्माणां मूलं स्वीक्रियते सूत्रकारैः स्मृतिकारैश्च[४८]। यदा कश्चनेदृशस्य शीलस्य स्मृतेर्वा प्रमाणत्वमाक्षिपति, तदा धर्मविदः समादधति यद् याभ्यः शाखाभ्यो वेदविदां स्मृतिः शीलं वा प्रवृत्तं ताः शाखास्तदानीमविद्यन्त, परन्तु कालान्तरे नाशं गताः। इदानीमपि सम्प्रदायाविच्छेदाच्च तासां पूर्वसत्ताऽनुमीयते। अनध्यायविषय इमं कृतान्तं प्रतिपादयन्नापस्तम्ब आचष्टे—ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते"[४९]। एतादृशेऽनुमाने प्रतिबन्धोऽपि विधीयत आपस्तम्बेन। स प्राह यद् यत्र प्रीत्युपलब्धितः प्रयोगस्य प्रवृत्तिस्तत्रोत्सन्नपाठं शास्त्रं

---

श० ब्रा० ४, ४, २, १३—ता हता निरष्टा नात्मनश्च नेशते न दायस्य च नेशते।

मनु० ९, १८।

४५. गौ० ध० सू० २८, २२।

४६. आप० ध० सू० २, ६. १४, ४—दुहिता वा।

४७. निरुक्ते ३, ३।

४८. गौ० ध० सू० १, २; मनु० २, ६; द्र०—टि० ३।

४९. आप० ध० सू० १, ४, १२, १०। इदं सूत्रं व्याचक्षाणो हरदत्तः प्राह—"कथं तर्हि तेषामस्तित्वम्? प्रयोगादित्यादि। प्रयोगः स्मृतिनिबन्धनमनुष्ठानं च। तस्माद् ब्राह्मणान्यनुमीयन्ते मन्वादिभिरुपलब्धानीति। कथमन्यथा स्मरेयुरनुतिष्ठेयुर्वा। संभवति च तेषां वेदसंयोगः।" अपरश्चाह हरदत्तः "विधीयन्त इति विधयः कर्माणि। ते सर्वे स्मार्ता अपि ब्राह्मणेष्वेवोक्ताः।"

नानुमीयते प्रीतेरेव प्रवृत्तिहेतोः संभवात्[५०]। बौधायनेन प्रोक्तः शिष्टागमः प्रलीनशाखामूलोऽस्तीति व्याचष्टे गोविन्दस्वामी[५१]। आपस्तम्बेन प्रोक्तो धर्मज्ञसमयोऽप्यत्रैव पर्यवस्यति[५२]। धर्मसूत्रेषु प्रयुज्यमानः स्मृतिशब्दः स्मृतिपरम्परया परिरक्षितानां धर्माणां वाचकोऽस्ति, न तु ग्रन्थविशेषस्य यथा केचन विद्वांसः शब्दमिमं व्याचक्षते[५३]। सा स्मृतिर्यत्र वेदैर्न विरुध्यते तत्र प्रमाणम्। श्रुति-स्मृत्योर्विरोधे तु श्रुतिरेव प्रमाणम्। धर्मसूत्रकाराः श्रुत्यनुगामिनीं स्मृतिं संगृह्य धर्मान् प्रतिपादयन्ति।

धर्मसूत्रकाराणां स्मृतिकाराणां चैको महान् भेदो विद्यते। स्मृति-काराणां वचांसि विधिरूपेण प्रस्तूयन्ते। ते प्रायेण कथयन्ति—"धर्मान् वक्ष्यामि"। परन्तु धर्मसूत्रकाराः प्रायेण धर्माणां व्याख्यान-मेव प्रतिजानते। ते मन्यन्ते यद् धर्माः पूर्वमेव विद्यन्ते। ते तु श्रुति-मनुसृत्य तान् व्याचक्षते। एकैव श्रुतिरनेकधा व्याख्यायते सूत्रकारै-र्यथा चास्माभिः पूर्वं निर्दिष्टम् एतत्सर्वम्।

धर्मसूत्रकाराः सर्वथा श्रुतिमनुसन्धाय धर्मान् वर्णयन्ति। यत्कि-ञ्चिच्छ्रुतेः प्रतिकूलं तत्ते प्रत्याचक्षते। धर्मसूत्रेषु प्रतिपादितानां धर्माणां श्रुतिमूलत्वप्रदर्शनार्थं भूयान्प्रयासोऽपेक्ष्यते। इह तु तस्य दिङ्मात्रं प्रदर्शितं विदुषां परितोषाय।

---

५०. आप० ध० सू० १, ४, १२, ११।

५१. बौ० ध० सू० १, १, ४; तु०—वा० ध० १, ५।

५२. आप० ध० सू० १, १, १, २। हरदत्तो व्याचष्टे—"धर्मज्ञा ये मन्वादय-स्तेषां समयः प्रमाणं धर्माधर्मयोः।" आगामिसूत्रस्य व्याख्याने स प्राह—तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणं धर्मज्ञानां तु वेदाः प्रमाणम्।"

५३. गौ० ध० सू० १, २ (मिताक्षरावृत्तिः)। कालान्तरे तु स्मृतिशब्दो ग्रन्थ-विशेषाणां वाचकोऽभूदिति निश्चप्रचम्।

# विदेशेष्वस्माकं संस्कृतेः संस्कृतस्य च प्रसारः

धर्मेन्द्रकुमार गुप्तः*

प्राचीनकालादेव भारतस्यान्यैर्देशैः सह घनिष्ठः संबन्ध आसीदित्यैतिहासिकसामग्रीभिरवगम्यते। अयं सम्बन्धो व्यावसायिको राजनीतिको धार्मिकः सांस्कृतिकश्च आसीत्। महत्त्वाकाङ्क्षिणो भारतीया व्यापारिणः सुदूरदेशान् वाणिज्यार्थं जग्मुः, तत्र निवासं चक्रुः, अपरिमितं च धनमानर्जुः। अत्रत्याः साहसिका वीरा विभिन्नदेशेषु राज्यानि स्थापयामासुः विश्रुतांश्च राजवंशान् तत्र तत्र प्रवर्तयामासुः। अस्माकं धर्मोपदेशका विदेशेषु भारतीयां धर्मभावनां धार्मिकजीवनस्य चादर्शान् प्रसारयामासुः। सांस्कृतिकोऽपि संबन्ध एवमेव महत्त्वपूर्ण आसीत्। अस्माकं सांस्कृतिका दूतास्तत्र तत्र विदेशेषु संस्कृतिं कलां साहित्यं च विस्तारयांचक्रुः, असभ्यान् लोकांश्च सभ्यताया नवालोके समुपस्थापयांबभूवुः।

अस्माकं संस्कृतेः संप्रसारस्येतिहासः ख्रिष्टाब्दपूर्वचतुर्थशताब्द्याः, यदि नैव ततः प्राक्, प्रारभ्यते। ख्रिष्टाब्दपूर्वास्वासु शताब्दीषु सिंहल-ब्रह्मदेश-हिन्दचीन-मध्यैशियाप्रदेशा अस्माकं संस्कृतेः पर्याप्तं प्रभावभरं जगृहुः। पश्चिमैशियाप्रदेशेऽपि अस्मिन्काले ब्राह्मणधर्मस्य बौद्धसंप्रदायस्य च महान् प्रभावो बभूव। ख्रिष्टाब्द-पूर्वद्वितीयशताब्द्याम् आर्मीनियादेशे भारतीय उपनिवेश आसीदिति वयमितिहासतो जानीमः।

विदेशैः सहास्माकं व्यावसायिकस्य संबन्धस्येतिहासोऽपि प्राचीनोऽस्ति। ख्रिष्टाब्दपूर्वकाले मिस्रमेसोपोटैमियायवनादि देशैः सहास्माकं व्यापारिकः संपर्क आसीत्। मौर्यकालेऽयं संबन्धः प्रवृद्धिं प्राप्तः। अस्मिन्नेव काले समुद्रवणिजां परम्परा प्रावर्तत,

*एम.ए., एम.ओ.एल., प्राध्यापकः दयानन्द महाविद्यालयः, अम्बाला।

यया प्रतिवेशिदेशेषु भारतीयोपनिवेशानां स्थापना जाता। अलक्ष्येन्द्रस्याक्रमणात् (३२५ ख्रि० पू०) परं यवनैरस्माकं संपर्को जातः। सीरियामिश्रदेशीया यवनराजाः पाटलिपुत्रं मौर्यराजधानीं प्रति राजदूतान् विससृजुः, अशोकश्च (२७३-२३२ ख्रि० पू०) प्रत्युत्तररूपेण सीरिया-मिश्र-मैकेडोनिया-सीरिन्-एपिरसप्रभृतिषु यवनराज्येषु निजधर्ममहामात्यान् प्राहिणोत्। मिश्रराजोऽनन्तरं च रोमसम्राजो भारतेन सह समुद्रवाणिज्यमनन्यमाध्यमं चक्रुः, अयं च वाणिज्यसंबन्धः ख्रिष्टीयप्रथमशताब्द्यां तदनन्तरं चातितरामवर्धत। केनापि मिश्रसार्थवाहेन लिखितं 'दि पेरिप्लस् आव् दि इरिथ्रियन् सी' नामकं पुस्तकं विभिन्नानि समुद्रतटवर्तीनि पत्तनान्युल्लिखति यत्र विदेशीयैरस्माकं प्रचुरं वाणिज्यमभूत्। अस्मिन् ग्रन्थेऽस्माकं विविधनिर्यातव्यपदार्थानामपि सविस्तरमुल्लेखोऽस्ति। ख्रिष्टात् २३-७९ तमसंवत्सरवर्ती प्लिनीसमाख्यो लेखको निजे 'नैच्युरल् हिस्ट्री'—नाम्नि पुस्तके समुल्लिलेख यद्भारतं प्रतिवर्षं रोमसाम्राज्यात् पञ्चाशन्नियुतानि रोममुद्राणामार्जदिति।

अत्र प्राप्ताः पर्याप्तसंख्या रोमसुवर्णमुद्राः इमं महत्त्वपूर्णमुल्लेखं सत्यापयन्ति। श्रेण्यद्रमिलसाहित्येऽपि, मामल्लपुरेऽन्येषु च पत्तनेषु निवसतां यवनवणिजां पर्याप्ता उल्लेखाः सन्ति।

रोमसम्राड्भिः सह राजनीतिकोऽपि सम्बन्धो वाणिज्यसंपर्केण सहावर्धत। प्रारम्भिकासु तिसृषु ख्रिष्टीयशताब्दीषु भारतात् नवाधिका राजदूता रोमसाम्राज्यं प्रति गताः, ततोऽपि च राजकीयाः पुरुषा अत्रागताः। उभयोरपि राष्ट्रयोर्मध्यकेन्द्रम् 'एलेग्जेण्ड्रिया' इति ख्यातं नगरमासीत् यत्रास्माकमेका पृथग्वसतिरप्यवर्तत।

भारतीयसंस्कृतेः प्रमुखः प्रसारः सुदूरपूर्वप्रदेशेषु बभूव। तत्र साहसिका भारतीयाः प्रभूतान् सफलानुपनिवेशान् प्रतिष्ठापयामासुः यद्यपि तत्रत्याः शिलालेखास्तत्रत्यानि च धार्मिकस्थानानि अस्माकं सांस्कृतिकाधिकारस्य साक्ष्यं विदधति। एषु प्रदेशेषु अस्मत्संस्कृतेः प्रसारस्येतिहासो द्विसहस्रवर्षपूर्वतः प्रारभ्यते। तत्कालीनानि तत्रत्यानि ललितकलोदाहरणानि भारतीयां कलां संस्कृतिं चोपजीव्यत्वेन स्वीकुर्वन्ति। आर्यधर्मस्य बौद्धधर्मस्य च प्रमुखाः सिद्धान्तास्तत्र प्रतिदेशं प्राचलन्, भारतीया समाजव्यवस्था च प्रतिगृहं प्राविशत्। अद्यापि एतच्चिह्नानि तत्रावलोक्यन्ते।

एशियाया दक्षिणपूर्वस्यां स्थिता द्वीपसमूहा भारतस्य पुराणतमा उपनिवेशाः सन्ति। एषु द्वीपेषु भारतीया राजनीतिकं सांस्कृतिकं च साम्राज्यं वितेनिरे। कम्बुजीये फूनानप्रदेश आर्यसाम्राज्यस्याखण्डो विस्तार आसीत्। कौण्डिन्यनामा कश्चिद्भारतीयो ब्राह्मणस्तद्देश-वासिनः सभ्यतायाः प्रथमं पाठमपाठयत्। जयवर्मरुद्रवर्माणौ (ख्रि० षष्ठशताब्दीयौ) जयवर्मश्रुतवर्मयशोवर्मप्रभृतयश्च कम्बुजराजा भारत-स्यैव सन्तत्य आसन्। यशोवर्मसंस्थापितं यशोधरपुरम् 'अंगकोर-थामे'तिनाम्ना अद्यापि भारतीयसंस्कृतेस्तत्र प्रभावं सूचयति। कम्बोजदेशोऽधुना 'कम्बोडिया' इति नाम धारयति।

भारतीयाः सुवर्णभूमावपि निजोपनिवेशान् विरचयांबभूवुः। यः प्रदेशोऽधुना दक्षिणब्रह्मदेश-मलयप्रायद्वीपयोर्विभक्तोऽस्ति। कम्बुजदेशस्य प्राच्यां चम्पानामकं समृद्धं राज्यमासीद्, यस्य स्थापना कतिपयैर्भारतीय-व्यापारिभिः कृता। अस्मिन्नुपनिवेशे संस्कृतस्यैकातपत्रं राज्यमासीद् यस्य प्रमाणं तत्रत्याः शिलालेखाः सन्ति। बलिदेशेऽपि भारतीयं सांस्कृतिकं जीवनं प्रतिबिम्बित-मस्ति। अस्मद्देशीयैर्मुनिभिरयमुपनिवेशोऽस्थाप्यत। 'जावा' इति ख्याते यवद्वीपेऽपि भारतीयायाः कलायाः संस्कृतेश्च चरमो विकासः समभूदिति तत्रत्या भवनावशेषाः समुद्घोषयन्ति। भारतीयोप-निवेशेषु सुमात्राद्वीपमपि महत्त्वपूर्णं स्थानमधितिष्ठति। अत्र ख्रिष्टीयचतुर्थशताब्द्यां भारतीयं श्रीविजयराज्यं समस्थाप्यत। बौद्धाः शैलेन्द्रवंशीया राजानः ख्रिष्टीयाष्टमशताब्द्यां सुवर्णद्वीपे (यदन्तर्गता देशा मलयः, सुमात्राद्वीपं, यवद्वीपं, बलिद्वीपं, बकुल-देशश्चासन्) एकस्य समृद्धस्य प्रभावशालिनश्च साम्राज्यस्य स्थापनां चक्रुः। तेषां च चक्रवर्तित्वमाचम्पाकम्बुजप्रदेशमासीत्।

'बोर्नियो' इत्यस्य द्वीपस्य प्राक्तनं नाम बकुलपुरमित्यस्ति। ख्रिष्टीयचतुर्दशशतके भारतीयैरस्य स्थापनाऽकारि। कालान्तरेऽयं प्रदेशो भारतीयजीवनस्य सांस्कृतिकं केन्द्रं समजायत।

भारतस्य दक्षिणस्यां दिशि सिंहलद्वीपे भारतीयसंस्कृतेरग्रदूतः श्रीरामचन्द्र आसीत्। सिंहलेतिवृत्तानुसारं सौराष्ट्रनृपतेर्विजयस्य नेतृत्वे भारतीया इममुपनिवेशं प्रतिष्ठापयामासुः। ख्रिष्टाब्दपूर्व-तृतीयशताब्द्यां देवानां प्रियः प्रियदर्शी सम्राडशोकः स्वमात्मजं

महेन्द्रमात्मजां सङ्घमित्रां च बौद्धधर्मप्रचारार्थं श्रीलङ्कां प्राहिणोत्। अद्यापि सिंहलद्वीपे बौद्धधर्मस्य गभीरः प्रभावः स्फुटो लक्ष्यते।

चीनदेशेऽपि भारतीया निजसंस्कृतेः पताकायष्टिं निचख्नुः। साहसिका अस्मत्पूर्वजाः सांस्कृतिकदिग्विजयार्थं चीनमगच्छन्, इहत्यान् धार्मिकग्रन्थान् चीनभाषायामन्वलिखन् मौलिकान्यपि च ग्रन्थरत्नानि व्यरचयन्। चीनेतिवृत्तानुसारं चीनसम्राट् मिङ्ग-तिः (खिष्टीय ५८–७५ तमाब्दवर्ती) बौद्धधर्मज्ञानार्थमष्टादश विदुषो भारतं प्रति प्रहितवान्, ये वर्षगणमत्रोषित्वा बौद्धानां धर्मग्रन्थै-र्मूर्तिभिर्द्वाभ्यां च भारतीययतिभ्यां सह प्रत्यावर्तन्त पुनश्चीनम्। तदनन्तरमनेके भारतीयाश्चीनदेशं भारतीयसंस्कृति-प्रचारार्थं-मगच्छन्, येषु सङ्घवर्मा, धर्मसत्यः, धर्मकालः, विघ्नः, धर्मफलः, कालशिविः, लोकरक्षश्चेति प्रमुखा आसन्। इमे विद्वांसः ख्रि० चतुर्थशताब्द्याः प्राक् चीनयात्रामकुर्वन्। एतदनन्तरं चीनं गतेषु भारतीयेषु निम्नाङ्कितानां नामान्युल्लेख्यानि सन्ति—धर्मरक्षः, सङ्घदेवः, बुद्धभद्रः, सङ्घभूतिः, धर्मप्रियः, कुमारजीवः, विमलाक्षः, पुण्यत्रातश्चेति। एषु धर्मरक्षः (खि० ३८१ तमाब्दीयः) एकादशा-धिकशतं पुस्तकानि चीनभाषायामन्वलिखत्। कुमारजीवः ख्रिष्टीयपञ्चमशताब्द्यामुपपञ्चाशद् ग्रन्थान् चीनभाषान्तरितान-करोत्।

कालक्रमेण चीनदेशे सामान्यतो भारतीयभावनानां विशेषतश्च बौद्धसिद्धान्तानां महान् व्यापकश्च प्रसारोऽभूत्। फलतश्च चीनदेशीया यात्रिणोऽविरलं भारतमागच्छन्।

प्रमुखेषु चीनीययात्रिषु फ़ाहीन-सुन्युन्-ह्वेन्साङ्ग-इत्सिङ्ग-प्रभृतीनां नामान्युल्लेखनीयानि सन्ति। फ़ाहीनः कुमारजीवस्य शिष्य आसीत्, तस्यैव चादेशेन स भारतमुपागच्छत्, इहत्यां च संस्कृतिं सम्यङ् निरूप्य निजमातृभूमौ तद्गौरवगीतिमगायत्। भारतचीनयोः सांस्कृतिकसंपर्कस्योज्ज्वलं रूपं ह्वेन्त्साङ्गाभिधश्चीन-यात्री अस्माकं पुरतः प्रस्तौति। उभावपि देशौ सांस्कृतिकदृष्ट्या समीपीकर्तुमयं महाभागः प्रायततमाम्। एवमेवान्येऽपि चीन-देशीया यात्रिणो भारतभुवमभावयन्निजागमनेन, 'एतद्देशप्रसूतानां चाग्रजन्मनां सकाशात् स्वं स्वं चरित्रमशिक्षन्त।'

चीनतुरुष्कीयः खोतानप्रदेशोऽपि पुरा भारतीय उपनिवेश आसीत्। अत्र भारतीयसंस्कृतेर्विशेषतश्च बौद्धधर्मस्यापरिमितः प्रभावोऽवर्तत। कोरियायां जापाने चापि अस्मत्संस्कृतिश्चीनभाषाद्वारेण प्रवेशमलभत। तत्र बौद्धसिद्धान्तानां व्यापकः प्रभावोऽद्यापि गोचरीभवति।

सर्वेष्वप्येषूपनिवेशेषु भारतीयधर्मस्य महतां सिद्धान्तानां गम्भीरा च्छायाऽवलोक्यते। ब्रह्मदेशे सिंहलद्वीपे त्रिविष्टपे च बौद्धधर्मस्य व्यापकः प्रसारो वर्तते। केषुचिद्देशेषु पौराणिकधर्मस्यापि महती च्छाया लक्ष्यते। यवद्वीपे भारतीयदेवमूर्तीनां प्राचुर्यमाश्चर्यमातनोति। अत्र प्रमुखा देवा ब्रह्मा, विष्णुः महेशश्चापूज्यन्त, अन्तिमस्य च महान्महिमाऽगीयत। अत्र भट्टारगुरोः प्रख्याता प्रतिमा महायोगिनः शिवस्यैवास्तीति विदुषां निश्चयः।

बौद्धधर्मस्य हीनयानमहायानसंप्रदायावपि एषूपनिवेशेष्वप्रथेताम्। केचन दविष्ठाः प्रदेशा अपि बौद्धधर्मस्य विश्रुतकेन्द्राणि समजायन्त। एतादृशेषु केन्द्रेषु श्रीविजयो बौद्धानां प्रमुखं केन्द्रमासीत्।

कतिपयशिलालेखानुसारमनेके भारतीया विद्वांसोऽत्र गौरवास्पदं सम्मानमभजन्त, शिक्षायाश्च संप्रसारणं व्यदधुः। कम्बोजदेशेऽनेके विद्याश्रमा आसन्। अत्र राज्ञा यशोधरवर्मणा शताधिका एतादृशा आश्रमा अस्थाप्यन्तेति शिलालेखैर्जानीमहे। एतेष्वाश्रमेषु स्वाध्यायिनां ब्रह्मचारिणां परिश्रमेण भारतीयसंस्कृतेः संस्कृतवाङ्मयस्य च परमोज्ज्वला धारा तस्मिन् प्राक्तने युगे प्रावहत्।

भारतीया वर्णव्यवस्था कतिषुचिदुपनिवेशेषु प्राचलत्, परं नात्र कठोरतामभजत्। वैवाहिका आदर्शाः पद्धतयः सम्बन्धाश्च यथेह तथैवासन्। सतीप्रथाऽपि तत्र क्वचित् पप्रथे इति ज्ञायते। तत्रत्ये समाजे स्त्रीजातेर्गौरवमयं स्थानमासीत्।

एषूपनिवेशेषु भारतीयकलाया अपि उत्कृष्टं रूपं लक्ष्यते। मूर्तिकलायाः स्थापत्यकलायाः च भारतमेवैतेभ्यो दीक्षामददात्। अनेकानि मन्दिराणि भवनानि मूर्तयश्च भारतीय-शिल्पिनामेव कृतय इति स्पष्टमनुमीयते। तत्रत्यानि भव्यमन्दिराणि मनोरमा मूर्तयश्च न केवलं संख्यादृष्ट्या महत्त्वमावहन्ति, अपितु कलासौन्दर्यदृष्ट्याऽपि ताः कृतयः परमोच्चस्थानमर्हन्ति। यवद्वीपीयैः शैलेन्द्रैर्निर्मापितं बरबुदुरमन्दिरं स्थापत्यकलायाश्चरमं निदर्शनं

विद्यते। इदं भवननिर्माणकलायां तत्रत्यभारतीयानां चूडान्तं कौशलं प्रकटयति। प्रम्बनमोपत्यकास्थितो लाराजोगरङ्गसमाख्यो देवालयसमूहोऽपूर्वः खलु कलापरिपाकदृशा। तत्रत्येषु प्रमुखमनोरञ्जनसाधनेषु रामायणमहाभारताश्रितानां नाटकानामभिनयोऽप्येकतममासीत्।

एवं धर्मसंस्कृतिसमाजकलादीनां क्षेत्रेषु भारतीयसंस्कृतेरेषु प्रदेशेषु महान् व्यापकश्च प्रभावः संलक्ष्यते। न च केवलमेष्वेव क्षेत्रेषु, भाषासाहित्यक्षेत्रेऽपि एष प्रभावः सुस्पष्टमालोक्यते। सर्वेऽपीमे प्रदेशाः संस्कृतभाषासाहित्ययोः सुतरामृणिनो वर्तन्ते। संस्कृतशिलालेखा ब्रह्मदेशमलयकम्बोजसुमात्रादिषु सर्वेष्वप्युपनिवेशेषूपलभ्यन्ते। सहस्रवर्षपर्यन्तं संस्कृतशिलालेखानामेवैषु देशेषु प्राधान्यमासीत्।

शताधिकाः संस्कृतशिलालेखाश्चम्पात एवोपलभ्यन्ते। कम्बोजशिलालेखा यद्यपि संख्यायां नाधिकास्तथापि तेषामुदात्ता काव्यशैली सचेतसां चेतांसि रञ्जयति। शताधिकपङ्क्तिविस्तृताः कतिपये शिलालेखास्तु कवित्वदृष्ट्या भारतीयसंस्कृतकवीनामपि पुरतः सगौरवं स्थातुं पारयन्ति। छन्दोव्याकरणालंकारादीनां शास्त्रीयनियमानामप्रतिमं पालनमेषु दृश्यते। एभिश्शिलालेखैः वेदवेदान्तस्मृतिपुराणकाव्यव्याकरणादिविविधविद्यास्थानानामध्ययनाध्यापनपरंपरा तेषु तेषु प्रदेशेषु सिद्ध्यति। बौद्धजैनग्रन्थानामप्यनुशीलनमेषु देशेष्वभूत्। पाणिनेर्व्याकरणं पतञ्जलेर्महाभाष्यं मनोः स्मृतिश्च विशिष्टां प्रसृतिमलभत। वात्स्यायनचरकसुश्रुतादीनां कृतयोऽपि तत्र प्रसिद्धिमभजन्त।

काव्यक्षेत्रे कालिदासस्य प्रभावो महानमितश्चासीदिति कतिपयपुरालेखानां भाषाशैल्याऽनुमीयते। अष्टमूर्त्तेः शिवस्येदं वर्णनं तत्र च सरलसरसा पदावली कालिदासमनुस्मारयति—

जयति जितमनोजो ब्रह्मविष्ण्वादिदेव-
प्रणतपदयुगाब्जो निष्कलोऽष्टमूर्तिः।
त्रिभुवनहितहेतुः सर्वसंकल्पहारी
परपुरुष इह श्रीशानदेवोऽयमाद्यः॥

(७३१ तम खिष्टाब्दीयविक्रान्तवर्मशिलालेखात्)

अस्मादेव शिलालेखादुद्धृता 'याथातथ्यविशारदास्तु जगतामी-

शस्य नो सन्ति हि' इति पङ्क्तेः स्पष्टमेव कालिदासस्य 'न सन्ति याथार्थ्यविदः पिनाकिनः' (कुमारसंभवम् ५) इति पद्यांशस्य छायाऽस्ति। भाषाशैल्योर्दृष्टया इदं मन्दाक्रान्तानिबद्धं पद्यमपि उदाहार्यमस्ति—

यस्यात्मानः सकलमरुतां मानिनां माननीया
अष्टौ पुण्या वरहितकृतः सर्वलोकान् वहन्ति ।
अन्योन्यस्य स्वगुणविलयागाढसंबध्यमाना
योग्या युग्या इव पथि पथि स्यन्दनान् स्पन्दमानान् ॥

एतद्देशीया राजानोऽपि साहित्यिकगतिविधिषु सक्रियं भागमगृह्णन् । चम्पायाः कतिपये राजकवयस्तु वेददर्शनगणितव्याकरणधर्मशास्त्रादिविषयेष्वपि पारंगता आसन् ।

यवद्वीपेऽपि संस्कृतभाषावाङ्मययोरमितः प्रभावो लक्ष्यते। तत्रत्या जावानीभाषा संस्कृतशब्दबहुलाऽस्ति। अत्रत्यं साहित्यं भाषाविषयशैलीनां दृष्ट्या संस्कृतसाहित्यस्य प्रभावेनातितरामाक्रान्तं वर्तते। जावानी रामायणं महाभारतस्य जावानीभाषानुवादश्चोल्लेखमर्हतोऽत्रविषये। 'सुमनसान्तकं' नामात्रत्यं काव्यं कविकालिदासस्य रघुवंशमुपजीवति। अस्मिन् द्वादशशताब्द्याः कश्चिद्यवदेशीयो महाकविरिन्दुमतीस्वयंवरं सविस्तरं वर्णयति। एवमेवान्यत्काव्यं 'स्मरदहना'ख्यं कुमारसंभवमाश्रित्य विरचितं प्रतीयते। अपरमेकं महाकाव्यम् 'अर्जुनविवाहं' नाम भारवेः किरातार्जुनीयस्य प्रभावं पिशुनयति।

स्यामेति प्रसिद्धाया द्वारावत्या भाषाऽद्यापि संस्कृतादेव पारिभाषिकशब्दान् विरचयति। अस्यां भाषायां टैलिफोनः 'थोरोसप' (दूरशब्दः) विमानश्च 'अगाच्वान' (आकाशयानम्) इति कथ्येते। एवमेवान्येऽपि अनेके शब्दाः संस्कृतोद्भूता वर्तन्ते।

कतिपयेषूपनिवेशेषु नगरनामान्यपि संस्कृतस्य प्रभावं निदर्शयन्ति। अयोध्याकृत-शूरकृत-ब्रह्मवनसभाऽमरावती-सुमेरु-विजय-पाण्डुरङ्गप्रभृतीनि नगरनामानि संस्कृतादेव गृहीतानि सन्ति ।

एवं भाषासाहित्ययोः क्षेत्रेऽपि एषु सुदूरप्रदेशेषु भारतस्याक्षय्यः प्रभावः प्रकाशते। तथ्यमिदमस्मभ्यं गौरवस्य वस्तु विद्यते, परमस्माद्वयं शिक्षामपि गृह्णीयाम। तदैवास्माकं गौरवगीतिरर्थवती भवितुं शक्नोति। यतोहि पुरातनगौरवमात्रमेव कस्मैचिदपि राष्ट्राय विश्वस्मिन् जगति गौरवास्पदं स्थानं प्रदातुं न पारयति।

# कर्त्तव्यम्

मुनीश्वरदेवः*

इह जगति संघर्षे मानवः शारीरिकमानसिक-सुरक्षा-समुन्नत्यर्थं यद्-यद् आचरति यान्-यान् वा नियमान् विदधाति तत् सर्वं कर्त्तव्यम्। तत्र महती सूक्ष्मेक्षिकाऽपेक्ष्यते। तस्य आर्थिकसामाजिकधार्मिकराज-नीतिकमानसिकादयो बह्वोऽवान्तरभेदाः।

सर्व एव व्यवहार आदौ व्यष्टिगतो भवति। यदाऽन्येऽपि अनु-कुर्वन्तः तथाऽऽचरन्ति तदा स एव व्यवहारः सामाजिको जायमानः सामाजिकं कर्त्तव्यं सम्पद्यते। असंख्याता व्यवहारा नियमाश्च मान-वैर्व्यष्टिरूपेण समष्टिरूपेण वा पर्यैक्षिपत। तत्राऽनुपयोगिनो-ऽत्यक्षत। उपयोगिनस्तु अद्यापि जीवन्त्येव।

समाजेन वृता उत्तरसन्ततौ गत्वा प्रथाभिधां लभमाना व्यवहाराः पूर्वजैः परीक्षितत्वात् पुनःपरीक्षणं विनैव तथाविधा एव स्वीक्रियन्ते। यावत् कश्चिन्नियमो व्यष्टिगतस्तिष्ठति तावत् तस्य पालने भङ्गे वा स्वातन्त्र्यं भवति। यथा-यथा स नियमः समाजेन उत्तरसन्तत्या च गृह्यते तथा-तथा ततः भङ्गस्वातन्त्र्यांशोऽपैति तस्य पालनस्य चानिवार्यताऽऽयाति। पूर्वजैः प्रदत्ताः, तदानीं प्रवर्तमानाः, ये च भविष्यदर्थं कल्प्यन्ते ते नियमाः यदि शास्त्ररूपेण निबध्यन्ते तर्हि तेषु अनतिक्रमणीयता दुरतिक्रमणीयता वा प्रवृद्धतरा भवति। ते यदि पारलौकिका ईश्वरसंबद्धा वा, तर्हि पूज्यतमा अपि भवन्ति।

राज्यसंस्थाया जन्मनः प्राग् नियमानां भञ्जकस्य परलोके दैवी-शक्तेः इह च प्रायश्चित्तात् सामाजिकबहिष्काराल्लोकनिन्दायाश्च भयं बभूव। जातायां तु राजसंस्थायां राजकीयविधानान्तर्गतानां नियमानां भङ्गे राजदण्डभयमपि प्रादुर्बभूव। तदा कर्त्तव्यभङ्गस्व-तन्त्रता सर्वथा समाप्ता।

नैतिकाः शुद्धान्तःकरणेन वाऽऽदिष्टा अपि नियमाः कर्त्तव्यानि भवन्ति। एतेषां कर्त्तव्यस्रोतसां कतरदपि सार्वकालिकं सार्वभौमं च कर्त्तव्यं न बोधयति।

कर्त्तव्यबुद्धया निष्कामभावेन लोकसंग्रहभावेन वा नियमानाम-नुसर्तारो विरला एवेति सामान्यानां जनानां कृते लोभ-निन्दा-प्रशंसा-भयान्तःकरणशुद्धि-प्रकृतिमानवकृत-वैषम्यापसारणादिकानि साध-नानि उपयुज्यन्ते कर्त्तव्यमार्गे चालनार्थम्।

---

*शास्त्री, एम.ए., वि. वैदिक शोध-संस्थानम्।

एतैरप्युपायैराचर्यमाणं कर्त्तव्यम् अभ्यासेन स्वाभाविकमिव भवति, स्नेहोऽपि तस्मिन् कर्त्तव्ये तथा जायते यथा तद्रक्षणार्थं प्राणानपि न गणयन्ति। भयलोभादिवशात् केचन जना ईसानुयायिनो मुहम्मदानुयायिनश्चाभवन्। ते स्वेच्छानुयायिभ्यः केनाप्यंशेन न भिद्यन्ते, न च कर्त्तव्येषु श्रद्धायामपकृष्टाः।

कदाचिद् विभिन्नेषु कर्त्तव्येषु परस्परं विरोधोऽपि दृश्यते, न तु स वास्तविकः। तस्मिन्नवसरे वस्तुत एकमेव कर्त्तव्यं भवति। कर्त्तव्यनिर्णयेऽसमर्थ एव कर्त्तव्येषु विरोधं ब्रूते।

कदाचिद् एवंविधा अपि नियमाः संमुखमायान्ति येषां विरोध उल्लङ्घनं च कर्त्तव्यं भवति। किन्तु तत्राधिकारी स एव यः कर्त्तव्यानि आद्रियते, यः स्वयमपि नियमनिष्ठः। हत्याऽपि स्थितप्रज्ञस्य कर्त्तव्यमेव, नाकर्त्तव्यम्।

सुकरातेन केचन राजकीयनियमा बिभेदिरे। ततश्च कारागृहे निबद्धं तं मित्राणि आगत्य प्रोचुः—अधुना त्वं शासनेन व्यापादयिष्यसे। यदि पलायसे, तर्हि त्वत्प्राणरक्षा भवति। अन्यायेन निबद्धस्य पलायने च न कश्चिद् दोषः। एवमुक्तेन तेनोचे— नियमेषु श्रद्धावतो मम अद्ययावद् नियमपालनमेवोपदेशविषयोऽस्ति। नियमान् भित्त्वा स्वप्राणरक्षार्थं नाहं पलायिष्ये। अनैतिका एव नियमा मया भिद्यन्ते, न सर्वे। यदि अद्य पलाय्य कारागारनियमान् भिनद्मि तर्हि मम मरणानन्तरं स्वर्गे ईश्वरो वक्ष्यति—सुकरात! त्वया भुवि नियमा भिन्नाः इहापि त्वं नियमान् भेत्स्यसि इति न त्वमिह स्थानमर्हसि इति।

येषां भेदने नैतिकताभङ्गभयं न भवेत् तेऽनैतिका एव नियमा भेदार्हाः। सामान्यजनैरनैतिकजनैश्चापि कुनियमान् भित्त्वा न्यायो व्यवास्थापि इति इतिहासः। त एव नियमा अस्मत्कर्त्तव्यं येषाम् अस्माभिः स्वीकृतिः प्रत्यक्षमप्रत्यक्षं वा कथमपि भवति। मानवतारक्षार्थं कदाचिद् युद्धमपि कर्त्तव्यं भवति, तद् युद्धं स्वदेशे वा स्याद् विदेशैर्वा सह। अवसरविशेषे स्थानविशेषे वा यत् कर्त्तव्यं तत् ततोऽन्यत्र भेदार्हं भवति।

साम्प्रतं मन्तव्यानि परिवर्तन्ते। नवीनाः समस्याः पुरातनान् नियमान् अस्माभिर्बलाद् भेदयन्ति। तच्चानिवार्यम्। तस्मादपरिहार्येऽर्थे शोकस्थानं न विद्यते। केवलमेतद् ध्येयं यद् अनिष्टैः सह इष्टमपि न प्रवहेद् इति।

# समस्या-पूर्तयः

[फर्वरीमासस्याष्टमे दिनाङ्के संस्थानेनायोजितायां संस्कृत-कविता-प्रतियोगितायामिमाः समस्या-पूर्तयोऽश्राव्यन्त । तासां प्रथम-तृतीय-पुरस्कार-पुरस्कृता अन्याश्च कविता अधस्ताद् दीयन्ते । द्वितीय-पुरस्कारभाक् कविता तु शृङ्गारातिरेकान्नात्र प्रकाश्यत इति खेदमनुभवति —सम्पादकः]

१. *समस्या—*

नोद्युङ्क्ते, न प्रयुङ्क्ते, चलति न, सहते नैव, नारादुपैति ।

*पूर्तयः—*

कूटस्थः सर्व-साक्षी, जनिमृतिरहितः, केवलो निर्गुणो यः
शुद्धो बुद्धो महेशः प्रभवति सततं सच्चिदानन्दरूपः ।
अन्तर्यामी स आत्मा प्रकटित-विभवो भूर्भुवःस्वस्त्रिलोक्यां
नोद्युङ्क्ते न प्रयुङ्क्ते चलति न सहते नैव नारादुपैति ॥

वृत्तिं पापामपास्यत् तिमिर-ततिमिव स्वप्रभावात् प्रभावात्
स्वर्णभ्राजिष्णु जिष्णु प्रणयमुपनयद् वीर्यधामाप्रमेयम् ।
दुर्धर्षं तद् दुरापं सहजमकृतकं चोच्चतेजस्वि तेजो
नोद्युङ्क्ते न प्रयुङ्क्ते चलति न सहते नैव नारादुपैति ॥

(विद्यानिधिः भैंसवाल गुरुकुलस्थः)[1]

वीरैः सङ्ग्रामधीरैः प्रबल-रिपुदलं संप्रविष्टैः सुशिष्टैराघातैः शस्त्रपातैस्ततडतडतडत्त्रोडितानेक-शीर्षैः ।
संनीतोऽरातिवर्गः प्रखरतरशरैः सारदारं प्रहारं
नोद्युङ्क्क न प्रयुङ्क्ते चलति न सहते नैव नारादुपैति ॥

निर्लेपं निर्गुणं यत् समरसमतुलं निष्क्रियं निर्विकारं
वाणीबुद्धीन्द्रियाद्यैः सकलजनिमतां दुर्लभं सत्स्वरूपम् ।
राग-द्वेषादि-हीनं निरवधिसुखकं भासमानं स्वयं तद्
नोद्युङ्क्ते न प्रयुङ्क्ते चलति न सहते नैव नारादुपैति ॥

( जगदीश झा वि. वै. शोध-संस्थानम् )

---

१. तृतीय-पुरस्कारेण सम्मानितः ।

*प्रश्न:—*

सांख्यस्याव्यक्ततत्त्वं प्रकटयति कथं विश्वमेतद्विचित्रम्
कार्येऽस्मिन् निष्क्रियत्वात् स्वयमपि पुरुषं शक्त्यभावात् स्वतन्त्रम्।
अङ्गैरङ्गत्वहीनाऽऽश्रयमपरमथानाश्रिता व्रीडया ञ्चं
नोद्युङ्क्ते न प्रयुङ्क्ते चलति न सहते नैव नारादुपैति॥

नित्यः साक्षी कथं ज्ञो जगदिदमखिलं कर्तुमुद्युक्त ईशो
द्रष्टृत्वात् साक्षिरूपादवयवरहितो, मुक्तभावादसङ्गात्।
कार्ये कर्तेव, शक्तिं, क्षणमपि करणैः, पारतन्त्र्यं, प्रकृत्या
नोद्युङ्क्ते न प्रयुङ्क्ते चलति न सहते नैव, नारादुपैति॥

*उत्तरम्—*

अव्यक्तं तत्त्वमेवं प्रकटयति सखे! व्यक्तमेतत्समस्तं
सारल्यात्, कर्तृभावादथ च गुणमयं साम्यमूलं चलञ्च।
कैवल्यार्थञ्च पुंसः, स्वगुणमपि, गुणै, र्भिन्नरूपं, चितः किम्
नोद्युङ्क्ते, न प्रयुङ्क्ते, चलति न, सहते नैव, नारादुपैति॥

(इन्द्रदत्त उनियालः वि. वै. शो. संस्थानम्)[1]

युद्धक्षेत्रे क्षताङ्गैर्भरतजनिभुवो भूषणैर्वीरयोधै-
राक्रम्यारातिवर्गः प्रलभममभिहतः खर्वगर्वः प्रखिन्नः।
शौर्योद्दृप्तेन्द्रहस्तप्रहितपविहतोद्विग्नदैत्योपमानो,
नोद्युङ्क्ते, न प्रयुङ्क्ते, चलति न, सहते नैव, नारादुपैति॥

माकन्दोद्गन्धिपुष्पप्रथितरससमास्वादमाद्यद्विरेफो-
न्मादैः साचिव्यमाप्तैः पिककुलरसितैः पुष्पकाले कराले।
कामिन्याऽऽकर्णकृष्टेक्षणविशिखशतेनार्द्यमानस्तपस्वी,
नोद्युङ्क्ते न प्रयुङ्क्ते चलति न सहते नैव नारादुपैति॥

(व्रजनन्दन मिश्रः वि. वै. शो. सं.)

२. *समस्या—*

काकिण्या तुलनीयतामुपगतः कार्षापणः क्रोशति॥

*पूर्तयः—*

ये सोपध्युपदोपधां दधति, ये चोत्कोचसंकोचिनः
संमान्याः प्रभवन्ति शासनविधौ ते चेत् समानं द्वये।

---

१. प्रथम-पुरस्कारेण सम्मानितः।

धिक् सामान्यमनर्गलं बलमिवानामृष्टतत्त्वान्तरं
काकिण्या तुलनीयतामुपगतः कार्षापणः क्रोशति ॥
(विद्यानिधिः)

त्वं हे चन्दिर ! सुन्दरो निजगुणैश्चञ्चज्जगच्चन्दयन्
मा खेदीः खलु दीपकेन तुलितोऽभिज्ञेतरैर्दुर्नरैः ।
किं भोः शाकवणिग्भिरापणधराकोणाश्रितैः पामरैः
काकिण्या तुलनीयतामुपगतः कार्षापणः क्रोशति ? ॥

शास्त्राम्भोनिधिमन्थमन्दरगिरिः सन्मार्गगामी सदा
तुङ्गस्थानविभूषणं सुपदभाङ् नाऽधीयते चेत्तदा ।
नासौ सीदति रोदिति प्रचलति स्वस्माद् विधेयात्, किमु
काकिण्या तुलनीयतामुपगतः कार्षापणः क्रोशति ? ॥
(जगदीश झा)

केनाप्यज्ञजनेन वाङ्मधुरिमाणं ते रसालोपमं
विश्वस्मिन्नविजानता वितुलितः काकेन चेत्त्वं पिक !
खेदं मा वह तेन, पश्य, वणिजा शाकापणे किं वृथा
काकिण्या तुलनीयतामुपगतः कार्षापणः क्रोशति ?
(पशुपति झा वि. वै. शो. सं.)

रत्नस्यास्ति यथा महार्घमहिमा स्वर्णं तथैवार्ह्यते,
किं वाच्यं रजतस्य मूल्यमधुना यच्चैधते नित्यशः ।
दृष्ट्वैवं निजगोत्रजस्य विभवं सन्तप्यमानः शुचा,
काकिण्या तुलनीयतामुपगतः कार्षापणः क्रोशति ॥

केयूरे च विभाति काञ्चनमहो हारे शिरोभूषणे,
रौप्यञ्चापि वरोरुचारुकटके काञ्च्याञ्च सम्राजते ।
कीर्तिश्रीकमनीयताफलभुजो दृष्ट्वा वयस्यान्निजान्,
काकिण्या-तुलनीयतामुपगतः कार्षापणः क्रोशति ॥
(सच्चिदानन्द ओझा वि. वै. शो. सं.)

३. *समस्या*—

भेको हहा फणिमुखे ददते चपेटाम्

*पूर्तिः*—

स्थानं बलाबलविधौ भवतीह हेतु-
नैवोज्ज्वलो गुणगणो न कुलीनतादि ।
जम्बालजालमधिगम्य सुदुर्बलोऽपि
भेको हहा फणिमुखे ददते चपेटाम् ॥
(जगदीश झा)

अन्योन्य-लाभ-विधया मिलिताः समस्ताः
सङ्घे हि शक्तिमथ ते निपुणं विदन्तः ।
साम्राज्यवाद-हनने सततं प्रवृत्ता
भेको हहा फणिमुखे ददते चपेटाम् ॥

सूर्यो न राज्यगगनेऽस्तमुपैति येषां
पातालगामि विपुलं खलु राज्यमूलम् ।
तेषां हि पादतलतः स्खलिताद्य भूमिः
भेको हहा फणिमुखे ददते चपेटाम् ॥

(यशोदेवः खन्नास्थसरस्वतीसंस्कृतविद्यालयेऽध्यापकः)

या वैदिकी परमपावनसंस्कृतिस्तां
नीचैः करोति कलुषाचरणं खलानाम् ।
आर्यत्वमस्ति परिभूतमनार्यभावैः,
भेको हहा फणिमुखे ददते चपेटाम् ॥५॥

चीनस्य संश्रयमुपेत्य विवादिपाक-
स्त्यानः समुच्छलति चञ्चल-पाणिपादः ।
संत्रासयत्यथ स भारतमुग्रवीर्यं,
भेको हहा फणिमुखे ददते चपेटाम् ॥६॥

मूढः प्रहृष्यति विषीदति पण्डितोऽद्य,
मान्यं न संस्कृतमसंस्कृतमेव मान्यम् ।
विद्या विनश्यति विवृद्धिमती त्वविद्या
भेको हहा फणिमुखे ददते चपेटाम् ॥९॥

गौरा गता गतमथापि च तत्प्रभुत्वं,
सन्त्येव चात्र बहुशः सुसमृद्धभाषाः ।
तेषां गिरा तदपि ताः सकला दुनोति
भेको हहा फणिमुखे ददते चपेटाम् ॥१०॥

शक्त्याऽखिलं विदलयद् वलयं जगत्याः
साम्राज्यमृद्धमपि खण्डितदास्य-पाशाः ।
देशाः सघोषमबला अपि तर्जयन्ति
भेको हहा फणिमुखे ददते चपेटाम् ॥१२॥

(इन्द्रदत्त उनियालः)

# जीव्याश्चिरं प्रिय जवाहर ! लोकभूत्यै

इन्द्रदत्त उनियालः

[संस्थानेनायोजितायामाशुकविताप्रतियोगितायां प्रथमपुरस्कारेण सम्मानितेयं समस्यापूर्तिः। द्वितीयपुरस्कारभाक् तु शृङ्गारातिरेकात् नेह प्रकाशितेति खेदः।

—सम्पादकः]

यावद् धरातलमलंकुरुते हिमाद्रिः,
यावच्च जह्नुतनयाऽऽश्रयते समुद्रम्।
तावत् प्रजाहृदय-रञ्जन ! मन्त्रदर्शिन् !
जीव्याश्चिरं प्रिय जवाहर ! लोकभूत्यै ॥१॥

प्रोद्दामयुद्ध-दहनार्चिषु संस्थितस्य,
विद्वेष-तीव्र-विषवेग-विमूर्छितस्य।
एकस्त्वमेव जगतः शरणं विभासि,
जीव्याश्चिरं प्रिय जवाहर ! लोकभूत्यै ॥२॥

पुत्रं पिता च वनिता च धनं गृहस्य,
बाल्यञ्च यौवनमपीह च वार्धकञ्च।
सर्वं समर्पितमिदं भवता परार्थे,
जीव्याश्चिरं प्रिय जवाहर ! लोकभूत्यै ॥३॥

शीलप्रिय व्रत-चरित्र-सुधर्मगामिन्,
सन्मार्गदर्शक नयेऽपि विचारयुक्त।
जैनस्य धर्म इव कर्मरत स्वमार्गे,
जीव्याश्चिरं प्रिय जवाहर ! लोकभूत्यै ॥४॥

मुक्तो विकाररहितोऽतिविवेकशीलः,
व्यापी समस्तभुवने सुखदुःखहीनः।
आत्मेव यश्चरति देहयुतोऽपि स त्वम्,
जीव्याश्चिरं प्रिय जवाहर ! लोकभूत्यै ॥५॥

मोक्ष-प्रियोऽप्यरि-निरोधप्रदत्तचित्तः,
संज्ञात-सत्यमतिरेवमयोगहीनः
बौद्धस्य धर्म इव शान्तिनिदानप्रीतः,
जीव्याश्चिरं प्रिय जवाहर! लोकभूत्यै ॥६॥

मानापमानसुखदुःखप्रिय प्रजायै,
देशे समर्पितशरीर दयार्द्रभाव।
शत्रुप्रकर्षहर सौख्यकर प्रजानाम्,
जीव्याश्चिरं प्रिय जवाहर! लोकभूत्यै ॥७॥

---

# पाटलां प्रति

शिवप्रसादो भारद्वाजः

कण्टकानां कुसुम-शयनं किमधिशेषे पाटले?
व्रतमिदं विषमं वितनुषे नववयसि किं पाटले?

को नु दुःशासनकरः किसलय-वसनमयि! तव हरति?
कुत्र ते ते सुरस-रसिकाः शकुनि-विजिताः पाटले?
कण्टकानां ... ... ... ...

मृदुलाङ्गि! सहते न तनुमपि तव कर-स्पर्शं तनुः।
शूल-शयनं तप उदारं चरसि किमिदं पाटले?
कण्टकानां ... ... ... ...

किं नु ते दयितः प्रयातो दूरमयि न निवर्तते?
विकचितामपि को नु निर्दय-हृदय एवं त्यजति रे!
कण्टकानां ... ... ... ...

हन्त! विधुरे लोक ईदृश एव मा शुच उत्सुके!
राग-वृत्ती रसिक-मनसां मधुकरी ननु पाटले!
कण्टकानां ... ... ... ...

---

# कतिपयशब्दाश्रितः स्त्रीजातेः सामाजिक-विकासस्थिति-विमर्शः

माधवअनन्त शास्त्री फड़के*

संस्कृतभाषायां विद्यन्ते केचनैतादृशाः शब्दा येषां सम्यगालोचनेन स्त्रीणां सामाजिकविकासादिकस्य क्रमो ज्ञातुं शक्यते।

प्राचीनतमे काले तदानीन्तनैर्मानवैः पदार्थान् बोधयितुं येषामव्यक्तध्वनीनामुच्चारणं कृतम्, ये चाव्यक्तध्वनयो बहुना कालेन समाजे व्यक्ततामापन्नाः सन्तः शब्दरूपेणागृह्यन्त तेषामतिप्राक्तनं स्वरूपं कथं भवेदित्ययं प्रश्नो विदुषो हठाद् विचारयितुं सततं प्रेरयति। इमं प्रश्नं सम्यङ् निर्णेतुं भाषाशास्त्रज्ञाः वैयाकरणाः शब्दनिर्वचनकाराश्च सहस्राधिकवर्षेभ्यः सततं प्रयतन्ते। क्वचनांशे सफलाः सन्तोऽपि सर्वेष्वशेषु संप्रत्यपि न ते साफल्यमभजन्त।

**प्रकृतनिबन्धस्य वक्तव्यांशाः —**

(१) प्राचीनमनुष्याणां स्थितिः, स्त्रीभिः सह सम्बन्धः, स्त्रीणां विषये कल्पनाः, स्त्रीपुरुषाणां परस्परं शरीर-सम्बन्धेन समाजस्य निर्माणं, परस्परं कार्य-विभागः, जन्म-विवाह-मरणानां संस्काररूपत्वं, स्त्रीणामधिकार-संकोच एवं तासामधिकाराणां वर्तमानं स्वरूपम्।

(२) अतिप्राचीनशब्दानां क्रमनियामकमिदं कल्पितं, येषु शब्देषु धातो रूपमत्यल्पं बोध्यार्थश्चानेकशब्दानध्याहृत्य सम्पद्यते तेऽतिप्राचीनाः, यथा पुत्रवाचकस्तोकशब्दः, यत्र च धातो रूपं स्पष्टं भासतेऽर्थश्च शब्दाध्याहारेण विनाऽल्पशब्दाध्याहारेण वा स्फुटः क्रियते ते शब्दास्ततोऽर्वाचीनाः, यथा पुत्रवाचक आत्मजशब्दः।

(३) अतिप्राचीनकाले स्त्रीपुरुषबोधकाः शब्दाः समानरूपा एवाऽऽसन् परन्तु महति काले व्यतीते परस्परं भेदबोधकशरीरकार्ययोज्ञनिन शब्देष्वल्पो भेदो जातः, यथा रामः—रामा, सुन्दरः—सुन्दरी, कान्तः—कान्ता, बालः—बाला इत्यादयः।

---

*एम. ए., साहित्य-पुराणेतिहासाचार्यः, प्राध्यापकः सेन्ट ऐण्ड्रयूज कालेज, गोरखपुर।

(४) प्रथमतः सृष्टिः ततः परस्परं संघर्षः, ततो नियमनम्, ततः कर्तव्यज्ञानम्, अनन्तरं परस्परमेलनेन एकत्र वासेन समाज-स्थितिः, ततो नियमानामावश्यकपालनीयत्वेन धर्मरूपत्वं ततः पाप-पुण्यकल्पनया परलोक-कल्पना, तत उपपादकदर्शनम्, ततः समाजे दृढस्थितिरिति पदार्थ-विकास-क्रम-नियमः।

प्राचीनभारतोयवैयाकरणानां लिङ्गवचनविषये विचारजातमेवं विद्यते—प्रकृतितः सर्वे पदार्था जायन्ते, प्रकृतिः सत्त्व-रजस्तमो-गुणविशिष्टाऽस्ति अतस्तत उत्पन्नाः सर्वेऽपि पदार्था गुणत्रय-विशिष्टाः सन्ति, परन्तु प्रतिपदार्थं त्रिगुणानां न्यूनाधिकभावेन स्थितिर्विद्यते। प्रतिमनुष्यमेकस्मिन् समये पदार्थस्थितानां त्रयाणां गुणानां ज्ञानं न भवति, यतः पदार्थ-ज्ञान-साधन-रूपे चेतसि त्रिषु गुणेषु यस्य गुणस्य प्राकट्यं भवति तमनुसृत्य पदार्थस्थगुणबोधो भवति, तत्र सत्त्वं नाम सुखं प्रकाश इत्यादिकम्। रजो नाम दुःख-चञ्चलतादिकम्। तमो नामालस्याज्ञानप्रभृतिकम्। एवञ्चैकदा नैकेन मनुजेनैकस्मात्पदार्थात् सुखदुःखादिकस्यानुभवः क्रियतेऽपितु मनुष्यत्रयेण। उक्तञ्च—

परिव्राट्-कामुक-शुनामेकस्यां प्रमदा-तनौ।
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः॥

एवं प्रकृतितो जातेषु शब्देषु यत्र सत्त्वगुणः प्रकटो भवति स पुंलिङ्गीति व्यवह्रियते, एवं यत्र रजः-प्राधान्यं स स्त्रीलिङ्गीति, यत्र चोभयसाम्यं स नपुंसकलिङ्गीति। येषां शब्दानां गुणद्वयं प्रकटं भवति तेषां लिङ्गद्वयं ज्ञेयं यथा गोशब्दः। तथा यत्र गुणत्रयं प्रकटं भवति स शब्दस्त्रिलिङ्गो भवति यथा नटशब्दः। अत्र मुख्यं कारणं वक्त्रादेः चेतसि गुणद्वयादेः प्रादुर्भावः, अथवा पदार्थस्थ-गुणद्वयादि-प्राकट्येन मानवचेतसि गुणद्वयादिप्रादुर्भावो जायत इति कल्पना।

कस्मिन् शब्दे गुणेषु त्रिषु कतमो गुणः प्रकटो भवतीति तु प्राचीन-तमकालात् निश्चितमस्ति, तस्य ज्ञानं तु परम्परातः कोशतो वा भवति।

**वचन-विषये**—एकस्यार्थ-बोधन एकवचनं द्वयोर्बोधने द्विवचनं त्रयाणाम् अधिकानां वा बोधने बहुवचनमिति स्थितिः। अथापि

संस्कृतभाषायां केचनैतादृशः शब्दा उपलभ्यन्ते एकार्थस्य बोधनेऽपि येषु नित्यं बहुवचनमेव क्रियते, यथा दाराः, लाजाः, अक्षता इति। अस्य कारणजिज्ञासायां दारादिशब्देषु पदार्थवत्तदवयवानामपि नित्यं बोधनं भवतीति मत्वा ततो बहुवचनप्रत्ययः क्रियते, नारी-शब्दः स्त्रीवाचकोऽपि ततः कृतेनैकवचनादिनैकाद्यर्थस्य बोधको भवति, तथा दारशब्दः स्त्रीत्ववाचकोऽपि सर्वदा पुंलिङ्गीति नियम्यते। अत्र कः शब्दोऽवयवसहितार्थस्य बोधनान्नित्यंबहुवचनान्तः को वाऽवयवरहितार्थस्य बोधक एवं स्त्रीत्वाद्यर्थकादपि कस्माच्छब्दात् पुंलिङ्गादिबोधकः प्रत्ययः प्रयोक्तव्य इत्यादि सर्वमत्यज्ञातादादिकालादेव परम्परया निश्चितं नियमितमिवास्ते, तस्य ज्ञानं तु सम्प्रति कोशतः पाणिन्यादेर्व्याकरणतश्च भवति।

आस्तां तावत्, प्रकृतमनुसंधाय स्त्रीवाचकान् काँश्चिद्विशिष्टान् शब्दानाश्रित्य मनुष्यस्य विकासक्रमदृष्टया पूर्वप्रदर्शितान् विषयान् विवरितुं प्रयतामहे।

**दाराः**—दारशब्दः क्र्यादेर्विदारणार्थकाद् दृधातोर्निष्पन्नः। दृणन्तीति दारयन्तीति वा दाराः,अर्थात् या भिन्दन्ति भेदयन्ति वा ताः दाराः। अतिप्राचीनतमे काले स्त्रीपुरुषाणां पार्थक्येन समुदायोऽवर्तत, केवलमगतिकत्वेन मनसिजशमनार्थं स्त्रीपुरुषयोः परस्परं संसर्गः कञ्चित्कालं[1] भवति स्म। तदा पुरुषवत्स्त्रियोऽपि समुदायेन स्थिताः सत्यः पुरुषैः साकं युध्यन्ते स्म, पुरुषवत्स्वातन्त्र्येण चाखेटकादिकं कुर्वन्ति स्म। अतोऽतिप्राचीनसमये पुरुषैरन्यपुरुषाणामिव समुदायेन तिष्ठन्तीनां युद्धादिकार्यसंपादिकानां स्त्रीणां कृते पुँल्लिङ्गप्रत्ययान्तो बहुवचनान्तश्च प्रयोग उचित एव कृतः। कदाचित् क्रियामात्रनिमित्तजशब्दप्रयोगकाले तस्मिन् दारशब्दव्यतिरिक्ताः शब्दाः स्त्रीणां कृते नासन्निति प्रतिभाति। इमामतिप्राचीनां स्थितिमज्ञात्वानेकसहस्रवर्षेभ्योऽनन्तरमुत्पन्नैः शब्दनिर्वचनकारैः साम्प्रतिकं प्रायो दृश्यमानं स्त्रीस्वभावं दृष्ट्वेत्थं निर्वचनं कृतम्—"दारयन्ति भ्रातॄन्, दृ विदारणे णिजन्त" इति। स्त्रीणां समुदायरूपेण स्थितिर्युद्धादिकर्तृता च क्वचिद् वेदेऽप्युपलभ्यते। यथा "नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च……" (तैत्ति. रुद्रे नमकाध्याये ४)।

---

१, मनु. ४, ३५

**वनिता**—वनिताशब्दोऽपि संभवतः पुरुषैः साकं युद्धे पराजयं स्वीयमनुभूय वने पलायमानानां स्त्रीणां बोधकः स्यात् । "तदस्य संजातमि"ति सूत्रेण वनशब्दादितच्प्रत्यये वनिताशब्दः साधयितुं शक्यते । अर्वाचीननिर्वचनकारैरिमां स्थितिमज्ञात्वा "वन संभक्तौ" बाहुलकादितच्, वनति अथवा वन्यत इति कृतं निर्वचनमुपलभ्यते ।

**सीमन्तिनी**—अयं शब्दोऽपि संभवतः पुरुषाऽऽक्रमणमवरोद्धुं स्वीयप्रदेशसीम्नि स्थापितानां बलवतीनां स्त्रीणां बोधकः स्यात्, सीम्नोऽन्तः सीमन्तः, सीमन्तः अस्ति अस्या इति सीमन्तिनी, अयं शब्दः स्त्रीणां पुरुषाणां च भिन्नो निवासप्रदेश आसीदिति सूचयति । संप्रति वर्तमाने सीमन्तोन्नयनाख्ये संस्कारे अथवा विवाहमहोत्सवे सीमन्तपूजनकर्मण्यपि प्रदेशद्वयमर्यादेत्ययमर्थोऽभिप्रेतः अस्त्येव । 'सीमन्तः केशवेशे' इत्यर्थस्तु साम्प्रतिक एव । यतोऽतिप्राचीनसमये स्त्रियः पुरुषाश्च शिरस्थान् केशान् रक्षन्ति स्म । ततः पुरुषैः स्त्रीभिश्च परस्परं मिलित्वा समाजे स्थापिते चौलोपनयनादिसंस्कारेषु ब्राह्मणसूत्रस्मृतिग्रन्थसमये[1] पुरुषैः केवलं केशकर्तनेऽङ्गीकृते सीमन्तयुक्ताः स्त्रिय एवावशिष्टाः,अतःशब्दप्रवृत्तिकारणं मूलार्थं विस्मृत्य सीमन्तिनी शब्दः केशवेशयुक्तत्वात् स्त्रीणां वाचकः सम्पन्न इति संभाव्यते ।

**प्रमदा मत्तकाशिनी**—एतच्छब्दद्वयमतिप्राचीनसमये पुरुषवत् स्त्रियोऽपि मदोत्पादकद्रव्यसेवनपरा बभूवुरिति स्थितिं सूचयति ।

**वामा, प्रतीपदर्शिनी, वामलोचना**—एते शब्दाः विशिष्टां परमप्राचीनां स्थितिं बोधयन्ति । तथाहि, बहौ काले व्यतीते पुरुषाः स्त्रीः स्ववशे कर्तुं प्रयतन्ते स्म, तादृशं पुरुषप्रयत्नं दृष्ट्वा स्त्रियस्तु सर्वथा विपरीतं मन्यन्ते स्म । वाम शब्दस्य प्राथमिकोऽर्थो विरुद्ध इत्येवास्ति, यथा दक्षिणमार्गः—वाममार्गः, दक्षिणहस्तः—वामहस्त इति । ततो दक्षिण-शब्दो यथा लक्षणया कुशलार्थकः संजातस्तथा वामशब्दोऽपि सुन्दरार्थकः समजायत ।

एवं कोपना, भामिनी, मानिनी शब्दा अपि ज्ञेयाः ।

**उत्तमा, कामिनी, वरारोहा, वरवर्णिनी**—एते शब्दाः समाज-

---

१. पाणिनेः शकन्ध्वादिर्गणः, सीमन्तः केशवेशे स्यात् इति कोषः ।

निर्माणानन्तरं पुरुषैः स्त्रीणां यादृश्यनुभूतिः कृता तस्या बोधकाः सन्ति। एवं सुन्दरी-रमणी-रामा-कान्ता-ललना-प्रभृतयोऽपि।

एवं स्त्रीभिः पुरुषाणां यादृश्यनुभूतिः कृता तद्बोधका अपि केचन शब्दाः समाना एवोपलभ्यन्ते। यथा उत्तमः कान्तः, सुन्दरः, रामः, रमण इत्यादयः।

प्राचीनतमे काले प्रायः स्त्रीपुरुषवाचकाः शब्दाः समानरूपा एवासन्, अस्याः स्थितेरवशेषोऽपत्यवाचकशब्देषु सम्प्रत्यपि दृश्यते[1]। कालेऽतीते स्वतन्त्रस्त्रीणामथवा पुरुषाधीनस्त्रीणां बोधं कर्तुं शब्दान् पुरुषवाचकान् किञ्चिदंशेन विपरिणमय्य स्त्रीत्वबोधकम् आकारं ईकारं वा पुरुषवाचकशब्दात् परस्ताद् योजयन्ति स्म[2]।

इच्छावती, कामुकी, चिरंटी (चिरेण अटति), स्वयंवरा, पतिंवरा, सुवासिनी, वर्येत्यादयः शब्दाश्च स्त्रीभिः स्वयमेव योग्यं पुरुषमन्विष्य तेन सह गार्हस्थ्यजीवनमनुभूयते स्मेत्यस्याः स्थितेर्बोधकाः कदाचित्संभवेयुः।

स्वैरिणी, इत्वरी, बन्धकी, असती, कुलटा इत्यादयः शब्दाः स्त्रीभिः पुरुषाणां दुष्टस्वभावादिकमनुभूयैकं परित्यज्यान्यपुरुषाश्रयणं कृतमित्यस्य सूचकाः सन्ति। समाजे साध्वसाध्वनुभवानन्तरं ये नियमा अवश्यं पालनीयाः साधव इति स्वीकृताः[3]ताननुसरन्तीनां स्त्रीणां बोधका अपि शब्दास्तदानीन्तनस्थितेः सूचकाः सन्ति, यथा—असती-सती, पांसुला-अपांसुला, कुलटा-अकुलटेति। एवं च जम्पती दम्पती, एतौ शब्दौ स्त्रियं वशीकृत्य स्त्रीपुरुषावेकत्र निवसतः स्मेत्यस्या अवस्थायाः सूचकौ वैयाकरणैः कथंचिद् बलाज्जायाशब्दस्थाने जम्-भावं दम्-भावं वाऽऽदेशमवलम्ब्य व्युत्पादितौ[4]। स्त्रीपुरुषयोर्युग्मं बोधयितुं य-

---

१. "आहुर्दुहितरं सर्वे" (अमरको. २, म, २७)।

२. अत्र पाणिनेः 'अजाद्यतष्टाप्', 'ऋन्नेभ्यो ङीप्', 'षिद्गौरादिभ्यश्च' इत्यादिसूत्राणि द्रष्टव्यानि।

३. अस्माकं धर्माचारयोर्नियमानां संकोचविकासक्रमरूपो निबन्धो द्रष्टव्यः।

४. द्रष्टव्यं पाणिनेः "राजदन्तादिषु परम्" इति सूत्रे "जायाशब्दस्य दम्भावो जम्भावो वा निपात्यते।"

च्चिह्नं प्रथमतो जातं तत्सम्प्रति द्विवचनपदेन कथयन्ति, तां प्राथमिकी-मवस्थां विस्मृत्य महति काले व्यतीते तच्चिह्नं ययोः कयोरपि द्वयो-र्बोधकं जातम्। सम्प्रत्यपि पुरुषवाचकशब्दाद् द्विवचने कृते स्त्रीपुरुष-युग्मस्य बोधो भवति।[1]

अभिसारिका—अयं शब्दः स्थिरान् सामाजिकनियमानुल्लङ्घ्य गुप्तरूपेण परपुरुषसबन्धरूपाचरणस्य बोधकोऽस्ति। अस्य शब्दस्यार्थः, अभिप्रेतं पुरुषमुद्दिश्य समाजं वञ्चयित्वा तत्सङ्गमनार्थं गच्छन्ती नारी। साहित्यग्रन्थेषूदाहरणानि बहून्यत्र विषय उपलभ्यन्ते।

वधू-पाणिगृहीता-शब्दयोः स्त्रीवाचकयोर्मध्ये प्रापणार्थक "वह्"धा-तोर्निष्पन्नो वधूशब्दो बलादानीतस्त्रीबोधकः प्राचीनां तादृशीं स्थितिं सूचयति। पाणिगृहीता शब्दोऽपि बलात्पाणिं गृहीत्वाऽऽनी-तेत्यर्थं सुस्पष्टं प्रमाणयति। एवं स्त्र्यर्थबोधकः पुँल्लिङ्गी बहुवचनान्तो गृहशब्दोऽपीमां स्थितिं द्योतयति बलात्प्राप्तीकृतायां स्त्रियि स्वाधि-कारं ज्ञापयितुं समाजमाहूय पुरुषस्तथा तस्मै निवेदयति स्म। इमां प्राथमिकीं स्थितिं विवाहप्रयोगस्थाः केचन मन्त्रा अपि सूचयन्ति।[2]

गणिका, वारमुख्या—अस्यां स्थितावपि तदात्वे स्वस्वातन्त्र्यं रक्षन्त्यः काश्चन स्त्रियः स्वीयसमुदाये कांचन समर्थां चतुरां च स्त्रियं मुख्यतया परिगणय्यावस्थिता आसन्। तत्र मुख्यभूतायाः स्त्रिया गणिकादिकं नामावर्तत। परन्तु सर्वासामासामनेकपुरुषैः सह सम्बन्धेन स्वभावे स्वाभाविकी दुष्टता समजायत। इमां स्थितिं ऋग्वेदस्थम् उर्वशीपुरूरवः-संवादः सूचयति[3]। ईदृशसमुदायघटकस्त्रीणां नामानि वारस्त्री, वेश्या, रूपाजीवाप्रभृतीन्यासन्। एतैः शब्दैरेव तासां कार्यादिकं ज्ञायते। महिलाशब्दः पुरुषेण सह स्त्रिया अनुष्ठातव्येन नियमेन (तात्कालि-कधर्मनियमेन) सम्बन्धे जाते तया स्त्रिया सह तदीयभूम्यादिकमपि पुरुषायत्तं जायते स्मेत्यस्याः स्थितेः सूचकः। एवं च तदात्वे पुरुषाणां

---

१. "पुमान् स्त्रिया" प्रभृतीनि पाणिनिकृतैकशेषबोधकसूत्राणि द्रष्टव्यानि। एवमस्माक 'पाणिनीयसूत्राणां समाजविकासदृष्ट्या समालोचनम्' संज्ञको निबन्धो द्रष्टव्यः।

२. ऋग्वेदे १०, ८५, ३६; अथर्ववेदे १४, १, ५०

३. १०, ९५, १५

स्त्रीणां चैकत्र वासेन कुटुम्बजीवनं सुखदायकं समजनि। समाजरचना साध्वी समजायत। समाजधारणार्थं केचन अनुष्ठातव्यरूपेण नियमाः समाजघटकैः स्त्रीपुरुषैरङ्गीकृताः। "धारणाद्धर्म इत्याहुः" इदमनन्तरजकालिकं वाक्यं तदात्वे साफल्यमभजत। समाजे संपन्ने सन्तते रक्षणभारः समापन्नः। अतः स्त्रीपुरुषाणामेकत्र वासकरणमावश्यकं जातम्। एवं क्रमेण खेटकग्राम-पत्तन-नगराणि समुत्पन्नानि। अनेकाः कला उद्भूताः।[1] क्रमशोऽनुष्ठातव्यनियमपालनं स्त्रियः पुरुषाश्च कर्तव्यतया मन्यन्ते स्म। तौ परस्परं योगेन कार्यपूर्तिमावश्यकतयाऽनुभवतः स्म। अस्याः स्थितेः कल्पना अपत्य-तोक-शब्दाभ्यां सिध्यति।[2]

एवं प्रकारेण समाजे सुदृढे जाते स्त्रीणां विशिष्ट आदरस्तदात्वे समजायत। सा स्थितिर्मनुस्मृतावप्यनुवादरूपेणोपलभ्यते।[3]

एवं क्रमेण जातापत्यसंरक्षणं तच्छिक्षणभारोऽपि मातापितृरूपयोः स्त्रीपुरुषयोरुपरि समायातः। कन्यानामपि पुत्रवद् गृहे रक्षणं पितृसम्पत्तितो भागलाभश्च तदाऽवर्तत[4]। बालिकानां सर्वदा गृहे रक्षणेन समुत्पन्नानामापत्तीनामनुभवे जाते सति योग्येन वरेण विवाहं कृत्वा यथाशक्ति संपत्त्यादिकं च प्रदाय तासां वरगृहे प्रेषणमेव श्रेयस्करममन्यत[5]। तत्काले विवाहोपनयनादयः संस्कारा विहितत्वेन निश्चिताः समभवन्। कन्यकानामप्युपनयनादिकं तदात्वे प्रचलति स्म[6]। स्त्रियः स्वयं पाठयन्ति, मन्त्रव्याख्यानादिकं च कुर्वन्तिस्म। स्थितिमिमामुपाध्याया, उपाध्यायी, आचार्या इत्यादयः शब्दा

---

१. अस्माकं मानवविकासक्रमनिबन्धे विशेषेण विचारो द्रष्टव्यः।

२. न पतन्ति नियमेभ्योऽनेनेति अपत्यम्। तौति अनेनेति तोकम्, 'तु' इति सौत्रो धातुर्हिंसावृत्तिपूर्तिषु विद्यते। न पतन्ति नरके पित्रादयो येनेति निर्वचनं तु नरककल्पनातोऽनन्तरजम्।

३. ३, ५५-६०

४. ऋ ३, ३, १ इति अत्रत्यं सायणभाष्यं निरुक्तञ्च द्रष्टव्यम।

५. दुहितृशब्दस्य यास्ककृतं निर्वचनं द्रष्टव्यम्।

६. यम —पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं तु वेदानां सावित्रीवचनं तथा॥

बोधयन्ति[१] । स्त्रियः स्वयं विदुष्य आसन् । एतत्तु प्रज्ञा, प्राज्ञी, प्राज्ञा इत्यादयः शब्दाः सूचयन्ति । तदानीन्तने कालेऽनेककर्माणि कर्तव्यत्वेन निश्चितान्यभवन् । पुरुषाः स्त्रीभिः सह तान्यन्वतिष्ठन् । एतच्च पत्नी-सहधर्मचारिणीप्रभृतिशब्दैर्ज्ञायते[२] ।

समाजे पत्नीव्रत-पतिव्रत-नियमा अपि दृढरूपेण पालनीयत्वेनातिष्ठन्[३] । सुचरित्रा-सती-पतिव्रताप्रभृतिशब्दा इदं सूचयन्ति । परन्तु समाजे बलवतां पुरुषाणामधिकारवर्धनेन ते एकपत्नीव्रतं प्रतिज्ञायापि स्त्रियमन्यामुद्वहन्ति स्मेति स्थितिः कृतसपत्नीका, अध्यूढा, अधिविन्नेति शब्दैः सूच्यते । तथा कदाचित्कासांचित् स्त्रीणामपि पुरुषेणान्येन सह विवाहो भवति स्मेति पुनर्भूः, दिधिषूरित्येतौ शब्दौ सूचयतः ।

प्राचीनकाले स्त्रियः पुरुषैः सह युद्धं कर्तुं गच्छन्ति स्म[४] अथवा गृहे स्थित्वा पुराणि रक्षन्ति स्मेति वृत्तं पुरन्ध्रीशब्देन ज्ञायते[५] ।

अथ यथा यथा पुरुषाणां बहिः कर्तव्ये कार्येऽधिकारा अवर्धन्त तथा तथा स्त्रीणामपि गृहकार्येऽधिकारा ऐधन्त । युद्धार्थं पुरुषाः सदैव बहिरेवावातिष्ठन्त, अतोऽपत्यानां मात्रा सहैव सर्वदा सम्बन्धस्तासां प्रेम चोपलभ्यते स्मेति प्रायः स्त्रीनामाश्रित्यैवापत्यनामानि समजनिषत । कौन्तेयसौमित्रपार्थिवादिनामानि, उपनिषद्गतवंशाध्यायस्थनामानिच स्थितिमेतां सूचयन्तीति प्रतिभाति ।

स्त्रीणां पुरुषैः सहात्यन्तमभिन्नतां प्रेम चाङ्गनाशब्दो बोधयति । ततो गच्छति काले युगभेदे च संजाते पुरुषाणां न्यायेनान्यायेन वा अधिकारेषु वृद्धिं प्राप्तेषु तथा स्त्रीणामधिकारेषु ह्रासं गतेषु तासां केवलं प्रसवो गृहकार्याणि चेति संकुचितं कर्तव्यक्षेत्रमशिष्यत । अस्याधिकारसंकोचस्य बोधकाः शब्दाः—जनी-स्त्री-जायाप्रभृतयः वर्तन्ते ।

---

१. अमरः २, ६, १४ ।

२. पाणिनेः "पत्युर्नो यज्ञसंयोगे" सूत्रस्य भाष्यादिकं द्रष्टव्यम् ।

३. महाभारतस्थश्वेतकेतोः, ब्रह्माण्डपुराणस्थं दीर्घतमस आख्यानं च विवेचनीयम्, एवमस्माकं कामीयसंज्ञको निबन्धोऽपि द्रष्टव्यः ।

४. अत्र कैकेयीप्रभृतीनां स्त्रीणां वृत्तं विवेचनामर्हति ।

५. 'आब्रह्मन् ब्राह्मणो'...'पुरन्ध्री योषा' इत्यादिः तैत्तिरीयशाखास्थः शुक्लयजुर्वेदीयसंहितास्थश्च मन्त्रो द्रष्टव्यः ।

अन्ततो गत्वा च सांप्रतिके काले तासां केवलमुपभोग्यस्वरूपत्वं बलहीनत्वं च योषा-योषिदबलाप्रभृतयश्शब्दा बोधयन्ति ।[1]

अस्मिन् निबन्धे कांश्चन विशिष्टान् शब्दानाश्रित्य केवलं व्याकरणनिरुक्तदृष्टया तत्पोषकेतरवचनैश्च संभवतो यदुपलब्धम्, तद्विज्ञानां पुरतो विचारार्थं समुपस्थापितं नत्वत्राल्पांशेनाप्यस्माकं चेतो हठमागृह्णातीति शिवम् ।

## संस्कृत-वागेव मे शरणम्

बहादुरचन्द्रश्चापोत्कटः*

ऋषयः सिषेविरे यां द्रष्टारो वेदमन्त्राणाम् ।
सर्वातिशायिनी सा संस्कृतवाणी जयत्यनिशम् ॥१॥
मुनयश्च भेजिरे यां वाल्मीकिव्यासकपिलाद्याः ।
तामेव वन्दनीयां वन्देऽहं भारतीं भव्याम् ॥२॥
बहु मेनिरेऽथ बहवः कवयो यां कालिदासाद्याः ।
तामेव परमपूज्यां देवीं वाचं नमस्यामि ॥३॥
यस्यां सदास्ति गुप्तो भारतभूमेः सनातनो धर्मः ।
तामेव नौमि धन्यां शेवधिभूतां गिरं दिव्याम् ॥४॥
आविश्वं तन्वाना भारतवर्षस्य संस्कृतेर्ज्योतिः ।
विश्वस्य भूषणं सा संस्कृतवागेव मे शरणम् ॥५॥

*एम.ए., एम.ओ.एल., पीएच्. डी., संयुक्त महानिदेशकः, केन्द्रीय-पुरातत्त्व विभाग, देहली ।

१. यास्कनिरुक्तम्–३, ४, ३; बौधायनस्मृतिः 'अनिन्द्रिया नाम स्त्रियः मनुः ६, १–२ ।

# काश्मीरशैवदर्शनस्य तत्त्वग्रामे शुद्धाध्वा

रामचन्द्र द्विवेदः*

त्रिक-षडर्धसार-स्पन्द-प्रत्यभिज्ञाप्रमुखाभिर्भिन्नाभिरभिख्याभिरभिधीयमानं शिवाद्वयप्रतिपादकं महेश्वरदर्शनं साम्प्रतिकैर्विद्वदग्रेसरैः साधारण्येन काश्मीर-शैवदर्शनमिति परिचाय्यते । अद्वैतवादस्य विभिन्नास्तावत्पन्थानः । वेदान्तवाक्यकुसुमग्रथनार्थानां श्रुत्यन्तविदां सुविश्रुतो ब्रह्माद्वैतवादः । सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिक-विभागेषु प्राधान्येन विभक्तमपि बौद्धदर्शनं शून्याद्वैतवाद एव दृष्टि-प्रकर्षेण स्वारस्यमादधाति । तथा हि बोधिचित्तविवरणकाराः—'भिन्नाऽपि दर्शनाऽभिन्ना शून्यताद्वयलक्षणा' । सुगतो भगवान् बुद्धोऽपि तत एवामरकोषकृता "अद्वयवादी"ति अभिहितः । शब्दब्रह्म-विदां पाणिनीयानां शब्दाद्वैतवादः, शक्तिः परं तत्त्वमिति साधयतां शाक्तानां शाक्ताद्वैतवादोऽपि च विदितावेव विदित-वेदितव्यानाम् । तत्र तावत् कश्मीरशैवदर्शनं ब्रह्म—शून्य—शब्द—शक्त्यद्वयविलक्षणं शिवाद्वैतवादं व्यवस्थापयति ।

तदिदं शैवदर्शनं विश्वोत्तीर्णस्य विश्ववपुषश्च शिवस्याऽऽभासरूपाणि षट्त्रिंशत् तत्त्वानि प्रथयतितमाम् । महाद्वैतवादिनः शैवाः स्वात्म-सात्कृताशेषषट्त्रिंशत्तत्त्वकलापस्य परमशिवस्य व्यापकत्वाभिप्रायेण सप्तत्रिंशत्त्वमविकल्पात्मना च भाव्यं विश्वोत्तरेणेत्यविकल्पात्मकस्य मनसो वाचां च पारे वर्तमानस्य विश्वोत्तीर्णस्य तत्त्वस्याष्टात्रिंशत्त्व-मप्युद्घोषयन्ति । यदुक्तं श्रीतन्त्र-वटधातिकायाम्—

> षट्त्रिंशत्तत्त्वपर्यायस्तदभिन्नः परः शिवः ।
> उपदेश्यतया सोऽपि स्याद्वच्छेदभागतः ।
> अष्टात्रिंशं परं धाम यत्रेदं विश्वकं स्फुरेत् ॥

---

*एम. ए., पीएच. डी., साहित्य-दर्शनाचार्यः, दिल्लीविश्वविद्यालयस्य सायन्तने स्नातकोत्तर-शिक्षणालये प्राध्यापकः ।

कुल-क्रम-प्रत्यभिज्ञेतिप्रस्थानत्रय-जुष्टस्य शैवदर्शनस्य प्रत्यभिज्ञा-प्रक्रियायामेव शिवादिधरणीप्रान्तानां षट्त्रिंशत्तत्त्वानामेव निर्णयः।

वस्तु-प्रमेय-सामान्य-पदार्थपर्यायं किमिदं तत्त्वं नाम ? तस्य भावस्तत्त्वमिति व्युत्पत्त्या भेदेन स्थितानां बहूनां वर्गाणां बहुषु अङ्गेषु सामान्येन स्थितं 'यद्रूपं बहुधातुगामि' तत् सामान्यस्यन्दरूपत्वेन निखिल-व्यक्तिरूपाभासान्तरयोगेन ; तनन-सहिष्णुत्वादविभक्तं वर्गीकरणं तत्त्वम् । यथा गिरि-वृक्ष-पुर-प्रभृतीनां समान-धर्मिणां भिन्नानां पृथिवीरूपत्वम् । स्वकार्ये, धर्मसमुदाये, स्वसदृग्गुणे सामान्यतस्तननाद् व्याप्तृभावतस्तत्त्वशब्दस्यात्मार्थलाभः । यथाहुः श्रीमदभिनवगुप्तपादाः —

स्वस्मिन्कार्येऽथ धर्मौघे यद्वापि स्वसदृग्गुणे ।
आस्ते सामान्यकल्पेन तननाद् व्याप्तृभावतः ॥

—(तन्त्रालोके ६, ४-५)

त्रिक-दर्शने प्रातिभज्ञानोपस्कृत-युक्त्याऽप्यवधारितोऽबाधितश्च तत्त्वग्रामः प्रत्यक्षानुमानयोः परिच्छिन्नत्वात् शैवागमानेव परमं प्रमाणयति । जडचेतनलक्षणस्य तमःप्रकाशवद्विरुद्धस्वभावस्य 'इदमिति' 'अहमिति' परिचायितस्य विषयविषयिविभागविपन्नस्य संसारस्य परमशिवाभासरूपत्वं स्वीकुर्वतस्तत्त्वसन्दोहस्य द्विविधस्ताव-दध्वा । एकः मायामेयताऽभावात् शुद्ध इति अपरश्च मितत्वादशुद्ध इति रहस्यविद्भिर्विज्ञायते । तत्र तावदसिताध्वा मनाग् दिग्भेदेन शास्त्रान्तरसाधारणः । शुद्ध एवाध्वा त्रिकदर्शनस्य तदितरदर्शनवै-लक्षण्यं व्यवस्थापयति । शिवो हि परिस्फुरत्-स्वातन्त्र्य-शक्ति-महिम्ना शुद्धाशुद्धभेदेन चकास्ति । तस्यैव चाणव-कार्म-मायीय-मलरहितस्य सतः स्वेच्छामहिम्ना प्रथमोऽवभासः शुद्धाध्वा । शिवेच्छैव स्वातन्त्र्य-शक्त्या जगदुल्लिलासयिषया यत्[1] पञ्चधा प्रविभज्यते तत् शुद्धाध्वपंचकम् । यदाहुः—

---

१. शिवः स्वतन्त्रदृग्रूपः पंचशक्तिसुनिर्भरः ।
स्वातन्त्र्याभासितभिदा पंचधा प्रविभज्यते ॥ (तन्त्रालो ६,४८)

तदेवं पंचकमिदं शुद्धोऽध्वा परिभाष्यते । (तन्त्रालो. भा. ६,५५)

अपरस्तावत् शुद्धेतरोऽध्वा श्रीमताऽघोरेशेनाऽवभास्यते । तथा हि तत्रैव—

ईश्वरेच्छावशक्षुब्धभोगलोलिकचिद्गणान् ।
संविभक्तुमघोरेशः सृजतीह सितेतरम्[1] ॥

एतस्मिन् सितेतराध्वनि वेदान्तिनां माया, सांख्यानां पंचविंशतितत्त्वानि, शैवदर्शनाभिमताः पंचशक्तयश्च संगृह्यन्त इति माया, कला-विद्या-काल-राग-नियतिरूपं परमेश्वरशक्तिपंचकम्, पुरुषः, प्रकृतिः, महदहङ्कारमनोरूपं त्रिविधमन्तःकरणं, बुद्धिकर्मेन्द्रियाणि दश, स्थूलसूक्ष्मत्वभेदतश्च दशधा कार्यवर्गः (तन्मात्रपंचकं भूतपंचकं च इत्येवमत्रैकत्रिंशत्तत्त्वानि) इत्थमस्त्ययं तत्त्वप्रकाशः-




१. शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः । (तत्रैव ६,५६)




शुद्धोऽध्वा—

प्रकाशविमर्शात्मनः परमशिवस्य सर्वज्ञत्वं सर्वकर्तृत्वं च आम्नातम्। ज्ञानक्रिययोरभेदाभ्युपगमात् प्रकाशविमर्शयोर्भेदो वस्तुत औपचारिक एव। विमर्शो हि चित्, चैतन्यं, स्वरसोदिता परा वाक्, स्वातन्त्र्यं, परमात्मनो मुख्यमैश्वर्यं कर्तृत्वं, स्फुरता, सारो, हृदयं, स्पन्द इत्यादिभिः शब्दैरागमेषूद्घोष्यते[1]। अनवच्छिन्नपरप्रकाशः परमेशः स्वस्वातन्त्र्यवशात् शिवादितत्त्वात्मना प्रविभज्यते—तदात्मना स्फुरति प्रकाशते वा। सृष्टिक्रमावभासे हि क्रमेण चिदानन्देच्छाज्ञानक्रिया-शक्तीनां प्राधान्यम्[2]। उपपन्ना ह्येतासां शक्तीनां मनोविज्ञानदिशा क्रमप्रथा[3]। उपनिषदोऽप्यमुमेव क्रममवगमयन्ति[4]। तथाहि—

"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्··· ···तदैक्षत, बहु

---

१. परा प्रवेशिका पृ० १-२।

२. एकैकत्रापि तत्त्वेऽस्मिन् पंचशक्तिसुनिर्भरे।
तत्तत्प्राधान्ययोगेन स स भेदो निरूप्यते॥
(तन्त्रालो. ६, ५१-५२)

३. विस्तरेणावबोधायावलोकनीयम् —Abhinavagupta : Dr. K. C. Pandey.

४. छान्दोग्ये ६, ५३-५४।

स्याम्, प्रजायेय, इति तत्तेजोऽसृजत[1] (छान्दो. ६,२,१-३) शिवादि-सद्विद्यान्ततत्त्वोन्मीलने परमशिवस्यापरिच्छिन्नं शुद्धस्वातन्त्र्यमेव तत्तद्वैचित्र्येण स्फुरतीति मायीयमेयत्वाद्यशुद्धयभावादयं शुद्धोऽध्वा। अत्र च तत्त्वपंचके क्रमशः शाम्भव-शक्तिज-मन्त्रमहेश-मन्त्रनायक-मन्त्राख्यः शुद्धचैतन्यात्मा प्रमातृवर्गः। यथाहुः —

शाम्भवाः, शक्तिजा मन्त्रमहेशा मन्त्रनायकाः।
मन्त्रा इति विशुद्धाः स्युरमी पञ्च गणाः क्रमात्[2] ॥

चिच्छक्तिप्राधान्ये विश्वप्रतिष्ठाभूमिर्विश्वैकविग्रहो निखिलविश्व-क्रोडीकारेण द्योतमानः शुद्धाहमामर्शरूपः प्रकाशैकघनः शिवः। शिवतत्त्वमिदं सर्वप्रमातॄणामन्तः स्फुरत् पूर्णाहन्ता-चमत्कारमयं विश्वोत्तीर्णमपि विश्ववपु 'रवियुक्तज्ञानक्रियारूपं क्रियाद्वारेण सकल-तत्त्वराशिगतसृष्टिसंहारशतप्रतिबिम्बसहिष्णु' महाप्रकाशवपुरिति वर्ण्यते। यदुक्तं श्रीशिवदृष्टौ—

"आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः।
अनिरुद्धेच्छाप्रसरः प्रसरद्-दृक्-क्रियः शिवः॥"

यथा च श्रीविज्ञानेन्दुकौमुद्याम्—

"सर्वव्यापकताभूमिर्ज्ञत्व-कर्तृत्व-सम्मता।
निजाभासचमत्कारमयी शिवदशा स्मृता॥

शिवैकरूपं विश्वं न ततोऽतिरिच्यमानमिति शिवतत्त्वानां साम्या-वस्था। तथा हि श्रीशिवदृष्टौ—

"एवं सर्वपदार्थानां समैव शिवता स्थिता।
परापरादिभेदोऽत्र अश्रद्धानैरुदाहृतः॥"

शाम्भव-प्रमातुरत्र शुद्ध एवाहमामर्शः।

---

१. तन्त्रालो.।

२. ५३-५४।

**शक्तितत्त्वम्—**

शैवदार्शनिकैः शिवशक्त्योर्नित्याव्यभिचरद्रूपत्वमाम्नायते। शक्त्या विरहितः शिवः शव एवेति तेषां सिद्धान्तः। वह्निदाहिकयोरिवानयोर्नित्यं तादात्म्यम्। यथाहुः—

"शक्तिश्च शक्तिमद्रूपात् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव॥"

(श्रीमदभिनवगुप्तपादकृता बोधपंचदशिका श्लोकः ३)

अमुमेवार्थं श्लोकयामासुर्भगवत्पादश्रीशङ्कराचार्याः—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्।
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि॥

(आनन्दलहरी, १)

शिवो यदा आनन्दचमत्कारोद्रेकेण स्वस्वातन्त्र्यमाहात्म्यात् बहिरुल्लिसिषया—विश्वमेषितुं ज्ञातुं कर्तुं चोन्मुखो भवति तदा शक्तिस्वभावोऽभिधीयते। शिवस्यैव विश्ववैचित्र्यावभासनोन्मुखस्य किञ्चिदुच्छूनतावस्थायां शक्तितत्त्वव्यपदेशः। शक्तिजगणस्यानन्दशक्तिप्रमुखायां शक्तितत्त्वावस्थायाम् 'अहमस्मी'—त्यामर्शः।

**सदाशिवः—**

इच्छाशक्तिप्राधान्येऽनन्योन्मुखस्वात्मप्रकाशताविश्रान्तिरूपाया अहन्तालक्षणायाः ज्ञानशक्तेरुद्रेके शिवस्यैव सदाशिवतत्त्वव्यपदेशः।

"किन्त्वान्तरदशोद्रेकात् साराख्यं तत्त्वमादितः।"

(भास्करी पृ० २१७)

मन्त्रमहेशरूपशुद्धचैतन्यवर्गस्य विश्वमुन्मीलितमात्रचित्रकल्पतयैव भाति न पुनर्व्यक्ताकारतया। अस्य च 'अहमित्यधिकरणे इदन्तोल्लासरूपः अहमिदम्' इत्यामर्शः। यथाह श्रीभास्करः 'भावानान्तु स्तोकमिदन्तास्पर्शरूपितया अहन्तया ग्रहणम्, यत्सर्वमिदं तदहमेव न त्विदमाख्यं किमपि वस्तु भवति, एकस्य चिन्मात्रस्यैव सत्त्वात्।' (भास्करी पृ. २२६) आरोहक्रमेण (संहारक्रमेण) विश्वस्यास्फुटत्वापादनादहन्तारूपतोद्रेचनाच्च 'अन्तर्निमेषः' सदाशिव इत्यपि व्यपदिश्यते।

ईश्वरः—

चिदानन्दप्रभृतिषु पंचशक्तिषु ज्ञानस्य स्फुटत्वे इदन्तालक्षणायाः क्रियाशक्तेश्चोद्रेके ईश्वरतत्त्वम् । सदाशिवतत्त्वेऽन्तःकरणैक-वेद्यस्य विश्वस्येश्वरतत्त्वे व्यक्ताकारतयाऽनुसन्धानम् । इदन्ताया अहन्तापेक्षया किञ्चिदुद्रिक्ततत्वाद् 'इदमहम्' इति मन्त्रेश्वर-वर्गस्यामर्शः । यथाहुः "इदमहमिति तु इदमित्यंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्श निषिञ्चति तदेवेश्वरता" इदन्तारूपस्य विश्वस्य स्फुटत्वापादनात् 'बहिरुन्मेषः' एवेश्वरः । तत्र तावत् सदाशिवतत्त्वं स्फुटं चित्रमिवेति वर्णयन्ति साम्प्रतिकाः[१] ।

सद्विद्या—

अहन्तेदन्तयोरैक्यप्रतिपत्तिः सद्विद्या । प्रमातरि अहमिति, प्रमेये च इदमिति धीर्वैयधिकरण्यमुच्यते तयोः पुनः सामरस्यम्, 'अहमिदं धियोः' सामानाधिकरण्यमेव सद्विद्यात्वम् । यथाहुः "सामानाधिकरण्यं च सद्विद्याऽहमिदंधियोः ।" तथाह्यत्र 'अहमिदम्' इति समधृततुलापुटन्यायेन विमर्शः ; सद्विद्या नाम सती शुद्धा विद्या । शुद्धिः पुनरस्या बहिष्ठत्वेनावभासमानस्येदन्तास्पर्शदूषितस्य वेद्यवर्गस्य 'अहमिति' परामर्शोपपादनम् । यथाहुः—'शुद्धिर्बहिष्कृता-र्थानां स्वाहन्तायां निमज्जनम् ।" परमार्थतश्चिदेकरूपा अपि भावा अचिदात्मना-प्रमेयत्वेन (इदन्तया) स्फुरन्तीति तेषां यथा वस्त्ववभावसनमेव शुद्धिरुत्कृष्टत्वमविपरीतता वा ।

"अन्ये पुनः शुद्धिमित्थमस्या मन्यन्ते यत् सदाशिवादिष्वहमिदमिति सामरस्यशालिनी संविदस्ति, तत्र सामानाधिकरण्यादैकरस्ययोगेऽपि मायीयस्येदन्तांशोल्लासस्यावर्जनीयत्वात् सदाशिवादीनां च माया-वार्तानभिज्ञत्वात् सोऽयमिदन्तांशो मायीयतादोषव्युदासादहम्भाग-वदनया प्रतीयमानत्वेनावस्थाप्यते । तत्प्रतीतिव्यतिरेके तु तत्सामाना-धिकरण्यमेव भज्येत ।" अहमंशस्याच्छादकत्वावभासनं मायीयदोष-निरासपूर्वमिदन्तावभासनं वा शुद्धविद्येत्याचार्याः । अत्र च क्रिया-शक्तेः प्राधान्यम् । मन्त्रवर्गश्चात्र प्रमाता । तत्र सदाशिवतत्त्वे सदाशिवोऽधिष्ठाता, ईश्वरतत्त्वे ईश्वरः, विद्यातत्त्वे च सदा-शिवेश्वरौ । अधिष्ठातृदेवतानां तत्त्वान्तरत्वं नाशङ्कनीयम् । यथा

१. पश्यन्तु अभिनवगुप्तः पृष्ठ २४२ Dr. K. C. Pandey.

पृथिवी तत्त्वमिति स्वीकारेऽपि नूनं न कोऽपि शास्त्रकारस्तत्त्वान्तर-त्वेन मनुते तथैव सदाशिवादीनामधिष्ठातृदेवानामपि तत्त्वान्तरत्वं कथङ्कारं स्यात् ।[१]

तत्त्वपञ्चकमिदं परमशिवस्यैव चिदादिशक्तिव्यापारोल्लासाद-वस्थाभेदरूपम् । शिवस्वातन्त्र्यमेव स्वात्मनि स्वरूपभेदं तावद् दर्शयति । तत्त्वपंचके चास्मिन् देशकालरहितत्वात् तत्कृतः क्रमोऽपि नास्ति । चित्रशक्तिशतखचिते शिवे शक्तिव्यापृतिभेदादुपदेशार्थं भिन्नतत्त्वप्रकाशः शैवशासननये कल्प्यते वस्तुतस्त्वभेद एव । यथोक्तमध्वसिद्धौ—

"चित्रशक्तिसहस्राढ्यं शिवतत्त्वं समातिगम् ।
विभक्तं पञ्चधा चैकं शक्त्युल्लासविभेदतः ॥"

शाङ्करवेदान्तिभिः साग्रहं ब्रह्माद्वैतवादः प्रतिपाद्यमानोऽपि सदसद्विलक्षणमायया द्वैततामापाद्यते । पञ्चकृत्यविधायिनः शिवस्य तत्स्वातन्त्र्यस्याप्रतिहतत्वेन न कुत्रापि क्वचिदपि द्वैतप्रसक्तिः । शिवाद्वैतवादिभिः द्वैताभावोऽद्वैतमित्यनङ्गीकृत्य द्वयोः सामरस्यमद्वैत-मिति निर्णीयते । ब्रह्माद्वैतवादमधिक्षिपन् प्राह तत्रभवान् महार्थ-मञ्जरीकारो महेश्वरानन्दः—

"तत्र हि अद्वैतमात्रग्रहेणोपपाद्यमानमपि द्वैतकक्ष्यामेवाधिरोहति, यदत्र सत्यासत्यव्यवस्थया हेयोपादेयकल्पनायां तेनैवाकारेण द्वैत-मर्यादापर्यवसायित्वमनिवार्यम् ।"[२] अमुमेवार्थं भङ्ग्यन्तरेण श्लोक-यामासुः संविदुल्लासे—

द्वैतादन्यदसत्यकल्पमपरैरद्वैतमाख्यायते,
तद् द्वैते बत पर्यवस्यति कृतं वाचाटदुर्विद्यया ।
एते ते वयमेवमभ्युदयिनोः कस्यापि कस्याश्चिदा-
लस्येनोज्झितमैकरस्यमुभयोरद्वैतमाचक्ष्महे ॥

१. पश्यन्तु अभिनवगुप्तः पृ. २४२ Dr. K. C. Pandey.
२. महेश्वरानन्दः (महार्थमञ्जरीटीका) परिमले पृ. ५२ ।

वस्तुतो निर्विशेषाद्वैतवादिनां ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावतया प्रकाशैकधनमपि जडमणिरिव निर्विमर्शमेव। सेश्वरसांख्याना-मीश्वरो न केवलं पुष्करपलाशवत् सृष्टेर्निरपेक्षः अपितु तस्याः सृष्टेः प्रकृत्युपादानतया तदस्पृष्टत्वमपि नितरामापतति। सहकारि-कारणकारणपरतन्त्रस्य नैयायिकानामीश्वरस्य नाम्नैव न पुनः वास्तवं सर्वज्ञत्वं सर्वकर्तृत्वं च घटते। सर्वं क्षणिकमुद्घोषयन्तः सौगताश्चतुष्कोटिविनिर्मुक्तं शून्यं श्रद्दधानाः माध्यमिकाः प्रकाशविमर्शात्मकं विश्वोत्तीर्णं विश्ववपुश्च परं तत्त्वं कथं प्रतिष्ठापयेयुः? कर्ममीमांसकानां जैमिनीयानां निरीश्वरवादित्वं सुप्रथितमेव। सप्तसु नयेषु सप्तभङ्गीभिरनुक्रमं निमज्जतां स्याद्वादिनां नये सामरस्यसुभगः शिवाद्वैतवादः स्याद्वादतामेव भजेत्। इत्येवं शिवस्वरूपनिर्वाहे शुद्धाध्वनि सञ्चारे च महाद्वैतवादिनां कश्मीरशैवदार्शनिकानां सर्वदर्शन-विलक्षणा दृष्टिः।

---

## मोक्ष-महामोहः

भस्मोद्धूलन ! भद्रमस्तु भवतो रुद्राक्षमाले शुभं
हा सोपान-परम्परे ! गिरिसुता-कान्तालयालङ्कृते।
अद्याऽऽराधन-तोषितेन विभुना युष्मत्सपर्यासुखाऽऽ-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे॥

(कुवलयानन्दे)

कथा—

# अनाथता ....... सनाथता च

व्रजनन्दन मिश्रः*

दृश्यते किलास्मिन् वैरिञ्चे प्रपञ्चे तत्प्रपञ्चिता विविधा जीव-सृष्टिः। तस्यां मनुष्याः सर्वतः श्रेष्ठाः। तेषु केचन समृद्धा भवन्ति जनेन धनेन विद्यया च, अपरे मध्यमस्थितयः, इतरे चाधमस्थितयः। तत्र प्रथमे जना आत्मानं सर्वेभ्य उत्कृष्टं मन्यन्ते, मध्यमाः पुनर्मध्यस्थभावं भजन्ते, तृतीयश्रेणिकाः प्रायेणात्मानं हीनमनुभवन्ति। तेषु दृश्यतेऽयमपरविधोऽपि भावभेदो यद् ये नाम समृद्धा मध्यमस्थितिकाश्च त आत्मानं सनाथं मन्वते, तृतीयश्रेणिकाः प्रायेणानाथम्। परं किं नु ये सनाथमानिनस्ते वस्तुतः सनाथाः, उत तेषां स्वात्मनि सनाथत्वभ्रम एव। याथार्थ्येन विचारणपराः परावरवेदिनो हि नहि लौकिकसमृद्ध्या कंचन सनाथं मन्यन्ते, तदभावेन वाऽनाथम्। तेषां मतेन तु प्राप्तस्वात्मपरिज्ञानस्तन्मार्गाश्रितश्च सनाथः, इतरे च सर्वेऽनाथा एव। अत एवोपनिषत्सु—'सा होवाच मैत्रेयी, यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्, स्यां न्वहं तेनामृताऽऽहो नेति ?, नेति होवाच याज्ञवल्क्यः, यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यात्, अमृतत्वस्य तु नाशास्ति वित्तेन' (बृह. ४, ५, ३) इति मैत्रेयीयाज्ञवल्क्यसंवादांशेन समृद्ध्या सनाथत्वाभाव एव सूचितः।

गीतासु—'आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मया' (१६, १५) इत्यादिना, बाइबिले च 'सूच्याश्छिद्रमध्यादुष्ट्रो निर्गन्तुमर्हति, न तु धनिकः स्वर्गं गन्तुम्' इत्यनेन तथाविधसनाथत्वाभिमानिनां दुर्गतिरेव प्रदर्शिता। धम्मपदेऽपि भगवता शौद्धोदनिना—'अत्ता हि अत्तनो नाथो को हि नाथो परो सिया। अत्तना हि सुदन्तेन नाथं लभति दुल्लभं।' (१२,४) इत्यनेन यथार्थज्ञानमधिगन्तुमुद्यतस्यैव सनाथत्वं प्रदर्शितम्। अतः सिध्यति यत्—निर्व्यलीकधर्माध्वनीनः सनाथः, तद्भिन्नोऽनाथः। एतद्विषये श्रूयते चैका पुरातनी शोभनाऽऽख्यायिका। तथाहि—

पुरा किलैकदा मगधसाम्राज्याधारशिलाधातुरजातशत्रोः पिता

*व्याकरणाचार्यः, वि. वैदिक-शोध-संस्थानम्।

महाराजः श्रेणिकः सान्तःपुरपरिजनः सबलवाहनो विहारयात्रां निर्यातः पद्माऽशोकनागचम्पकाद्यनेकविधलतालिङ्गिततिलककुच-रसाल-शिरीष-सप्तपर्णादि-विविध-शाखिनि शाखा - निलीन-शुक-बर्हिण-मदन-कोकिल-कोभगक-भृङ्गारक-कोण्डलक-जीवञ्जीवका-दिशकुनि-गण-मधुरस्वर-रस्यता-परिमण्डिते मण्डितकुक्षिनामके चैत्ये समागतः। ददर्श तत्र स कस्यचिदेकस्य वृक्षस्याधस्तात् समाधिलीनं नवतरेण वयसा सौकुमार्येण सौन्दर्येण च सुभूषितशरीरं कञ्चन धीरं यतिप्रवीरं तद्दर्शनाक्षिप्तचित्तः स्तिमित इवासौ भवंश्चेतसि कलयां-म्बभूव—अहो कीदृगस्य शरीरलावण्यम्, रूपं चास्य स्वर्युवतिजन-मनोहारि, सौम्यता च शशिनमपि विलक्षयति, क्षान्तिश्च क्षमामप्य-धरीकरोति, निर्लोभता चास्य मम मनो लोभयति, भोगासङ्गता च मां स्वसङ्गतये प्रेरयति। नूनं संभाषणीयोऽयं युवा श्रमणः! इति।

इत्थं विचिन्त्य च महाराजः श्रेणिकः परिजनान् परित्यज्य स्वयमेकाकी समुपगम्य सप्रदक्षिणं प्रणम्य सविनयमिदमुवाच—भगवन्! भोगोचितमिदं भवत्तारुण्यम्। कथं नवेऽस्मिन्नेव वयसि प्रविव्रजिषाऽत्रभवतः समुत्पन्ना। भवितव्यमत्र नूनं केनापि अपरि-हार्येण हेतुना।

साधुः—महाराज! अनाथोऽहम्। नास्ति कश्चिन्मम नाथः, न चाप्यस्ति कश्चिदनुकम्पकः सुहृद् वा। अतएव प्रव्रज्यामुपगतोऽस्मि।

श्रेणिकः—अनाथत्वाद् यदि भवान् प्रव्रजितः, भवाम्यहं भवतो नाथः। मद्दत्तान् भुङ्क्ष्व भोगान्, सफलय तारुण्यम्। भव-द्विधस्य सुभगस्य नाथतामुपगतो जनोऽपि सौभाग्यभागेवेति मम निश्चिता मतिः।

यतिः—(सस्मितम्) श्रेणिक! स्वयमनाथः सन् परस्य नाथो भवितुमिच्छसि? नेदं संभवि।

अश्रुतपूर्वमिदं साधोर्वचः श्रुत्वा संभ्रान्तः सुविस्मितश्च श्रेणिकः पुनराह—भगवन्! किं ब्रवीषि? स्फीतोऽयं मदधीनो जनपदः, समृद्धा मे जानपदाः, जात्या अश्वाः, मदान्धाः करिणः, पराक्रमवत् सैन्यम्, अमरावतीनिभं नगरम्, रामणीयकनिधेरधिदेवतास्वरूप-मन्तःपुरम्, सर्वविधाश्च मानुष्यकाः कामभोगाः, अतुलं च मैश्वर्यम्, आज्ञा च ममाप्रतिहता, तथाप्यहमनाथः? मन्येऽविचार्यैवेदं भवतोक्तम्।

साधुस्तु राजानं किञ्चिदप्रतिभमिव दृष्ट्वा सस्मितमिदमुवाच—राजन् ! अनाथशब्दस्य वास्तविकमर्थं मन्ये न जानाति भवान्। न कश्चिल्लौकिकैनैश्वर्येण सनाथो भवति। सनाथत्वसम्पादकं त्वस्त्यन्यदेव किञ्चित्। मद्वृत्तान्तेनैव भवान् ज्ञास्यति याथार्थ्यम्। शृणु—

महाराज ! जानात्येव भवान् कौशाम्बीं नाम नगरीम्। तत्रासीन्मम पिता प्रभूतधनसञ्चयः श्रेष्ठिमुख्यः। अहमासं तस्य प्राणेभ्योऽपि प्रेयान् प्रशस्तः पुत्रः। माताऽपि मम वत्सला। अग्रजा भगिन्यो भ्रातरश्च मयि स्निग्धचेतसः। अनुजानां च तेषामहमासमादरपात्रम्। सुहृदश्चासन्मम प्राणसमाः, जाया चासीच्छायेव सर्वदा सहचरी। परिजनाश्चासन् ममाज्ञां शिरसा समुद्वोढुं सदैव समुद्युक्ताः नगरवासिनामप्यहमासं बहुमानपात्रम्। सौख्यावहं सर्वमपि वस्तुजातमासीन्मम सुलभम्।

तस्मिन्नेव तु भोगोचिते तारुण्यारुणे वयसि कदाचित् समुद्भूता प्राणान्तसमा ममाक्षिवेदना, व्यापच्च सहसा शरीरे सर्वेष्वङ्गेषु प्रचुरो दाहः। यथा कश्चिद्रोषपरीतोऽरातिः परमं तीक्ष्णमस्त्रं शरीरविवरे प्रवेश्य पीडामुत्पादयेत्तथैवासीन्ममाक्षिवेदना। इन्द्राशनिसमा परमदारुणा साऽक्षिवेदना मम त्रिकं हृदयमुत्तमाङ्गं च निरन्तरं व्यथयति स्म। क्षणमपि नासीत् पीडोपरमः। ममैतादृशीं दशां विलोक्य व्यथितचेता मम पिता मन्त्रमूलविशारदान् शास्त्रकुशलानद्वितीयान् विद्यामन्त्रचिकित्सकानाचार्यान् समाह्वयत्। समाहूतागतास्ते व्याधिं प्रतिकर्तुं शास्त्रोक्तां चतुष्पादां चिकित्सामकुर्वन्, न तु मां ततो विमोचयितुमशक्नुवन्। पश्य तावत् ममानाथत्वम्।

तातो मां सर्वस्वप्रदानेनापि रोगान्मोचयितुमुद्युक्त आसीत्, माता च स्वप्राणानां विनिमयेन, तथापि न तावपारयतां मां ततो मोचयितुम्। अग्रजा अनुजाश्च भ्रातरो भगिन्यश्चापि मद्दुःखेनाऽऽसन् म्लानवदनाः, सुहृदः परिजनाश्चाभवन् खिन्नचेतसः, न चाहं तया वेदनया विमुक्तोऽभवम्। राजन् ! अनुव्रता छायेव निरन्तरानुगमनतत्परा प्राणसमा मत्प्रियतमा मद्वेदनासन्तापसन्तप्तहृदयपरिणामाश्रुबिन्दुभिर्ममोरः सततं परिषिञ्चन्ती परित्यक्ताशनपाना विवर्जितस्नाना समुत्सृष्टमाल्यविलेपना निर्व्यापारा न चलति क्षणमपि मत्पार्श्वतो मयाऽसकृदुच्यमानाऽपि। राजन् ! न तथापि ते मां तस्मात् तीव्रवेदनाप्रभावान्मोचयितुमशकन्।

अथैवंविधवेदनानले दह्यमानस्य मम कदाचिन्निशीथकाले समुत्पन्नोऽयं विचारः—दुष्प्रतीकारैषा वेदना। दुरन्ते ह्यस्मिन् संसारे पौनःपुन्येनानुभूयते सर्वैरपि देहधारिभिरेषा। विमुक्तो भवेयं चेत् निश्चितं शमदमादिसम्पन्नो धर्मशरणोऽनगारो भूत्वा विचरेयम्। इति एवं विचार्य च प्रसुप्तस्य मम निद्रा समायाता। प्रातः समुत्थितोऽहमात्मानं नीरुजमपश्यम्। ततोऽहं मातापित्रा-दीनापृच्छ्य शमदमादिसम्पन्नः प्रव्रजितो जातः। गृहीतप्रव्रज्यो-ऽहमात्मनः परेषां च नाथः संवृत्तः।

राजन्! प्रव्रज्यां गृहीत्वाऽपि संयममार्गे ये यथावन्नोद्यन्तुमीहन्ते, तेऽप्यनाथा एव विज्ञेयाः। ते हि, यथाऽयन्त्रितः कूटकार्षापणो यथा च वैडूर्यप्रकाशो राढामणिर्न तन्मूल्यको भवति, तथैव भवन्ति सतां मध्येऽमान्याः। तेषां प्रव्रज्या तु परिपीतकालकूटमिवाश्रेयस एव प्रकल्पते। महाराज! कण्ठच्छेत्ता शत्रुर्न तथा भयङ्करो यथेयं दुर्गृहीता प्रव्रज्या भयमादधाति। अतः संयमिना मनोवाक्कायेन सर्वभूत-हिताय परप्राणपरित्राणात्मके संयममार्गे सावधानं प्रयतितव्यम्। योऽत्र संयममार्गे याथातथ्येन प्रयत्नवान्, स एव वस्तुतः सनाथः, इतरे त्वनाथा एवेति भवता विज्ञेयम् इति।

महाराजः श्रेणिकोऽपि संयमिनो मुखात् सनाथत्वानाथत्वनिदर्श-कमुपदेशात्मकं वृत्तान्तमुपलभ्य प्रसीदन्मनाः करयुगलं सम्पुटीकृत्य प्रावोच—भगवन्! भवता कोऽनाथः इति सम्यक् प्रदर्शितम्। मन्ये, भवद्वचनं सर्वथैवावितथम्। इति

इत्थं संयमिनं प्रशस्य प्रणम्य च श्रेणिकः सपरिवारः स्वराजधानीं प्रति प्रास्थत।

आख्यायिकयाऽनया प्रदर्शितो भावः प्रायः सर्वत्रैव धर्मसम्प्रदाये समुपलभ्यते। सर्वोऽपि धर्मसम्प्रदायो लौकिकसमृद्ध्या न कंचिदपि सनाथं मनुते। अत एव 'अधोऽधः पश्यतः कस्य महिमा नोपचीयते। उपर्युपरि पश्यन्तः सर्व एव दरिद्रति' इत्येवंविधाभिः सूक्तिभिस्त-थाविधसनाथत्वाभिमानिनामनाथतैव प्रदर्श्यते। वस्तुतो निर्व्यलीक-धर्माचरणमेव श्रेयसे कल्पते। अन्यथाप्रवृत्तौ तु निश्चितोऽन्धे तमसि सम्पातः। अतः सदैव ध्येयमिदं यत् परमार्थपदप्राप्तिसाधन-शमदमादिपराङ्मुखतैवानाथता, तदुन्मुखता तु सनाथतेति।

---

# संस्कृतनाटकानामुत्पत्तिः विकासश्च

वेदप्रकाशः *

नाटकं संस्कृतसाहित्यस्य गौरवपूर्णमङ्गं विद्यते। काव्यापेक्षया नाटकस्य महत्त्वं सर्वत्र प्रतिपाद्यते । अत एवोक्तम् "नाटकान्तं कवित्वम्" इति !

भारते नाट्यकलाया उत्पत्तिः कथञ्जातेति प्रश्नोऽयं नितरां जटिलो विवादास्पदश्च । वैज्ञानिकरीत्याऽनुदधतां विदुषाञ्चात्र विषये विविधा वादाः।

**(क) परम्परागतो दिव्योत्पत्तिवादः**—भारतीयां परम्परामनुसृत्य श्रूयते यथा द्युलोकावस्थितेन ब्रह्मणा देवमनुष्यादीनां मनोविनोदाय चतुर्वेदेभ्यः सारं गृहीत्वा "नाट्यवेद" नामधेयस्य पञ्चमवेदस्य सृष्टिः कृता । अनन्तरञ्च भरतमुनिना अस्य प्रसारो धरण्यां विहितः। तदभिवादिनी चेयं भरतवाग् भवति–

"जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥" इति

एतदनुसारेण ब्रह्मणा ऋग्वेदात् पाठ्यं (संवादम्), सामवेदाद् गायनं यजुर्वेदात् अभिनयं, अथर्ववेदाच्च रसमादाय नाट्यवेदनामको नवीनो वेदो निर्मितः । अस्मिन्नेव प्रसङ्गे शिवेन ताण्डवनृत्यस्य पार्वत्या लास्यनृत्यस्य, विष्णुना च आरभटी कैशिकी-सात्वतीति नाट्यवृत्तीनामस्मिन् समावेशः कृतः। विश्वकर्मणा तदर्थं रंगशाला निरमायि । इन्द्रध्वजपर्वावसरे च सर्वप्रथमं "त्रिपुरदाह"—"समुद्रमन्थन"—नामकयोः रूपकयोः प्रयोगो बभूव ! अनेन सिद्धान्तेन स्पष्टोभवति यन्नाट्यशास्त्रस्योद्गमस्थानं वेदाः । धार्मिकावसरे च धार्मिकाणां रूपकाणां प्रदर्शनं भवति स्म, स्त्रीपुरुषाश्च तत्र मिलित्वा कार्यमकुर्वन् इति ।

**(ख) वीरपूजावादः (मृतकपूजावादः)**— डा० रिजबेमतानुसारं नाटकोत्पत्तिः वीरपूजाप्रवृत्त्या जाता ज्ञायते ! परलोकप्राप्तानां

---

*वेदालङ्कारः, एम.ए., प्राध्यापकः, वि. वै. शोध-संस्थनाम् ।

वीरत्वादिगुणाद्युक्तानां पूर्वपुरुषाणां स्मरणाय तान्प्रति स्वश्रद्धाप्रख्यापनाय च नाटकारम्भोऽभवद् यथा ग्रीकदेशे दुःखान्तरूपकाणाम् (ट्रेजेडी) उद्भवः । अद्यत्वे प्रचलिताभ्यां रामकृष्णलीलाभ्यामपि अस्यैव सिद्धान्तस्य पुष्टिर्भवति । परं केवलं कल्पनाधारत्वान् नैष वादोऽन्यैः स्वीक्रियते ।

(ग) कृष्णोपासनावादः— अनेन मतेन कृष्णोपासना एव भारतीय-नाट्यकलायाः मूलं मन्यते । कृष्णोपासनाया नृत्य-गीत-वाद्यलीला-रथ-यात्रादिकानामङ्गानां नाट्य-विकासे महान् योगो विद्यते । नाटकेषु प्रयुक्तेन शौरसेनी बाहुल्येनापि शूरसेनदेशादेवास्योद्गमः प्रतीयते ! परं कृष्णसम्बन्धान्येव प्राक्तनानि नाटकानि अभवन्निति नास्त्यत्र प्रमाणम् । अन्यच्च रामशिवादीनां उपासनाप्रथाया नाट्य-साहित्य-विकासे महान् योगो लक्ष्यते तस्याश्चात्रोपेक्षा एव कृतेति नैष वादोऽपि समीचीनः प्रतीयते ।

(घ) पर्ववादः—अद्यत्वेऽपि नेपालादिषु प्रचलितेन इन्द्रध्वजनामकेन पर्वणा सह नाटकोद्गमसम्बन्धः कथ्यते । इन्द्रध्वजपर्वणः तुलना यूरोपे प्रचलितेन मेपोल (Maypole) पर्वणा सह क्रियते । अत्र इयं कल्पना यत् शिशिरान्ते वसन्तारम्भे आनन्दोल्लासाय जनैः नाटकारम्भः कृतः । अत्रायमेवाक्षेपो यत् इन्द्रध्वजोत्सवः (इन्द्रस्य वृत्रासुरोपरि विजयप्राप्तिसूचकः) वर्षर्तोरन्ते भवति न तु शिशिरान्ते ।

(ङ) डा० कीथमहोदयेनापि तथाविधमेव मतं प्रकटितम् । तदनुसारं प्रकृति-परिवर्तनस्य मूर्तरूपेण जनसाधारणेषु प्रकटीकरणेच्छा एव नाटकारम्भिका । महाभाष्यनिर्दिष्टेन "कंसवध"नाटकेन चास्य पुष्टिर्भवति । कंसानुयायिनीः कृष्णमुखेन कृष्णानुयायिनश्च रक्तवर्णमुखेन नाटकमकुर्वन् । अनेन च वसन्तस्य हेमन्तोपरि विजयकल्पना कीथमहोदयेन क्रियते । परं रूपकोद्भव-प्रसङ्गे कीथमहोदयस्यायं विचारो न सर्वसम्मतः ।

(च) काष्ठपुत्तलिकावादः—जर्मनविदुषा आर०, पिशल महोदयेनास्य कल्पना क्रियते । पुत्तलिका-पुत्रिका-दारुमयी इत्यादि नाम्ना च आसां महाभारते कथासरित्सागरे राजशेखर-कृतबाल-रामायणे च बहवः प्रयोगा उपलभ्यन्ते संस्कृतनाटकागतैः स्थापक-

सूत्रधार-शब्दैरस्य वादस्य पुष्टिर्भवति प्रो० हिलब्रैण्डमहोदयेनास्य खण्डने कथ्यते यदेष वाद एकां नाटकावस्थामेव प्रकटीकरोति न पुनरुद्भवम्। काष्ठपुत्तलिकानृत्यस्याधारभूतं नाटकं तच्च तत्पूर्वमेव विद्यमानमासीत्।

(छ) लोकप्रियस्वाङ्गवादः— प्रो० हिलब्रैण्ड-स्टेनकोनोमतानुसारं पूर्वप्रचलित-लोकप्रिय-स्वांग (सांग) प्रवृत्तिरेव रामायणमहाभारतकथानकाभ्यां सह मिलित्वा नाट्यं जनयामास। परं डा० कीथमतानुसारं रूपकात्पूर्वं तथाविधस्वाङ्गप्रयोगस्य सद्भावे पर्याप्तं प्रमाणं न विद्यते। कोनोमहोदयदत्तानि सर्वाण्यपि प्रमाणानि महाभाष्यकालिकानि, ततोऽप्यर्वाक्कालिकानि वा सन्ति यानि तत्पक्षं प्रतिष्ठापयितुं न क्षमन्ते।

(ज) छायानाटकवादः— डा० पिशलमहोदयेन प्रस्तावितः लूडर्स-केनोप्रभृतिभिश्चानुमोदितोऽयं सिद्धान्तः। परं भारतप्रचलितछायानाटकप्राचीनतायां नास्ति प्रमाणम्। यच्च दूताङ्गदनामकं छायानाटकमुपलभ्यते न तस्यापि प्राचीनत्वे किमपि साक्ष्यम्। डा० कीथमहोदयानुसारं अस्याधारः महाभाष्यीयस्थलविशेषस्य अयथार्थविधारणं प्रतीयते। किञ्च अत्रापि छायानाटकात् पूर्वं नाट्य-सद्भावः स्वीक्रियते। रूपकेषु गद्य-पद्य-मिश्रणस्य संस्कृत-प्राकृतयोश्च प्रयोगे किं कारणमिति शङ्कायाः समाधानमत्र न भवति।

(झ) संवाद-सूक्तम्— अनेकैः पाश्चात्यैः भारतीयैश्च विद्वद्भिर्वेदमूलकं नाट्यमित्यवधार्यते! संवाद-नृत्य-सङ्गीताभिनय-रूपाणि खलु नाटकांगानि। एषां चतुर्णामपि वेदेषु मूलमुपलभ्यते।

I. ऋग्वेदे यमयमीसूक्तम्, उर्वशी-पुरुरवःसूक्तम्, पणि-सरमासूक्तम्, इत्यादीनि पञ्चदशाधिकानि विद्यमानानि मन्यन्ते। एषामेव विकासेन वर्तमाननाटकोदयः संभाव्यते।

१८९६ ख्रीष्टाब्दे प्रो० मैक्समूलरमहोदयेन नाटकीय दृश्य-स्वरूपाण्येतानि सूक्तानि इति प्रस्तुतम्, तदेव तदनन्तरं प्राध्यापकः लेवीमहाशयः अनुमोदितवान्। श्रोडरमहाशयमतानुसारं तु संवाद-

सूक्तानि वस्तुतो रहस्यनाटकान्येव । एषाञ्चाभिनयः यज्ञावसरेषु गायन-नृत्य-वाद्याद्युपकरणैः सह याज्ञिकैः क्रियते स्म । डा० विण्डिश-ओल्डेन्बर्ग-पिशल-महोदयैश्च कथ्यते यदारम्भे संवादसूक्तानि गद्य-पद्यात्मकान्येवासन् । पश्चात् पद्यस्यैव रोचकत्वात् मञ्जुलत्वाच्च तत्स्वरूपमवशिष्टम् ।

II. नृत्यम्—ऋग्वेदे नृत्यस्योपलब्धिर्भवति । विवाह-सूक्ते नव-दम्पत्योः दीर्घायुष्यार्थं पुरन्ध्रीणां नृत्यवर्णनम् ।

III. संगीतम् — सामवेदोऽस्य मूलं सर्वैरपि ऐक्यमतेन स्वीक्रियते ।

IV. अभिनयः— महाव्रतानुष्ठानसदृशेषु कतिपयवैदिका-नुष्ठानक्रियाकलापेषु अभिनयस्य बीजं लक्ष्यते ।

(ञ) ग्रीक-प्रभावः— केचन विद्वांसः संस्कृत-नाटकोद्भवं यूनानदेश-प्रचलितरूपकात् मन्यन्ते । सिकन्दराक्रमणानन्तरं केचन यूनान-देशीया भारतीय-समुद्रतटे एव अवसन् । ते च विश्रामकाले मनोविनोदाय रूपकाणामायोजनमकुर्वन् । ज्योतिष-गणितादिविद्या इव भारतीयैः नाट्यकलाऽपि तेभ्य एव प्राप्ता इति वेबरमहोदयेन सर्वप्रथममस्य मतस्य एव स्थापना कृता परं पिशलमहोदयेन युक्तिसंगत-मस्य खण्डनं कृतम् । अस्य पक्षसमर्थकैः यवनिका शब्दमाश्रित्य संस्कृत-नाटकेषु ग्रीक-प्रभावः प्रतिपाद्यते । परं विचारानन्तरं यवनिकाशब्देन विज्ञायते यद् भारतीयनाटकपटिकाः पारसीक-पट-विरचिता अभवन् किञ्च ग्रीकनाटकेषु पटीप्रयोगाभाव एक 'यवनिका' शब्दप्रयोगोऽपि न संस्कृतनाटकेषूपलभ्यते । कालिदास-भवभूति-हर्षवर्धनप्रभृतीनां प्रसिद्धनाटककर्तॄणां रचनासु नैवास्य शब्दस्योप-लम्भः । राजशेखर'कर्पूरमञ्जर्यां' 'जवनिकान्तर' इति प्रयोगो-लक्ष्यते । सम्भाव्यतेऽस्यैव पूर्वरूपं यवनिकान्तरमिति मन्यते तत्पक्ष-समर्थकैः किञ्च देशकालैकताया अभावात् , सुख-दुःख-सम्मिश्रपूर्वकं सुखान्तत्वात् , प्रत्येकं नाटकस्याऽदीर्घाकारतया, रमणीयकल्पना-बहुलत्वाच्च भिद्यते संस्कृतरूपकं ग्रीकरूपकात् । न च संस्कृत-नाटकेषु तत्रैव सम्मिलितगानम् (chorus) ।

I. देशकालभिन्नता— ग्रीकनाटकेषु देशैक्यं कालैक्यञ्चानु-स्रियते स्म न संस्कृत-नाटकेषु । अभिज्ञानशकुन्तले हि एकस्य अङ्कस्य

देशः तपोवनं तर्हि अपरस्य राजभवनं पुनश्च एकस्य पृथिवी अपरस्य च द्यौः। उत्तररामचरिते च आदिमाङ्कद्वयस्य कथाकालेषु बहुवर्षाणां व्यवधानम्।

II. संस्कृतनाटकेषु करुणहासरसमिश्रो मधुररसः आस्वाद्यते न ग्रीकनाटकेषु। किञ्च संस्कृतनाटकानि भय-शोक-करुणामयानि सन्त्यपि न जातु दुःखान्तानि भवन्ति परं ग्रीकनाटकेषु दुःखान्तत्वं दृश्यते।

III. आकारे चोभयोर्भेदः। एकस्मिन् खेलाकाले यवनाः ट्रेजेडीत्रयं प्रहसनञ्चैकमकुर्वन् भारतीयरूपकं भारत एवोद्भूतं न तु देशान्तरे। एवंच दर्शितानि विविधमतानि नाटकोत्पत्तिविषये। नाटकविकासविषये चेदानीं विचारणा वितन्यते।

**रामायण-महाभारत-प्रभावः**— सर्वप्रथमं रामायणे महाभारते च नट-नाटक-नर्तकरङ्गमञ्चादिशब्दानां प्रयोगो यत्रस्तत्रोपलभ्यते। यथा रामायणे "नाटकान्यपरे प्राहुर्हास्यानि विवधानि च इति" तथा "शैलूषाश्च तथा स्त्रीभिर्यान्ति..." इत्यत्र शैलूष शब्दोऽपि नाटक-नटमेवाभिसूचयति। कुशीलव-शब्द-प्रयोगोऽपि सम्भवतो नट अर्थे एव जातः। एवमेव महाभारतेऽपि 'इत्यब्रवीत् सूत्रधारस्सूतः पौराणिकस्तथा" "अनर्ताश्च तथा सर्वे नटनर्तकगायकाः" इत्यादिषु नाटकोल्लेखः स्पष्टं लक्ष्यते, अत्र प्रयुज्यमाननटशब्दस्यार्थः श्रीधर-स्वामिना अपि 'नवरसाभिनय-चतुर' इत्येव कृतः। विराट्पर्वणि च रङ्गशालाया उल्लेखोऽपि लक्ष्यते।

"पाराशर्यशिलालिभ्यां भिक्षुनट-सूत्रयोः" (४-३-७)

इत्यत्र पाणिनेः सूत्रे नाट्यशास्त्र-नटसूत्रस्योपलम्भेन स्पष्टमेव यत् पाणिनेः प्राक् अनेकानि नाटकान्यासन्। तदाधारकत्वेन हि नटसूत्राणां रचना भवितुमर्हति। लक्षणग्रन्थानां रचना हि लक्ष्य-ग्रन्थानन्तरमेव संभवति।

भासनामव्यपदेशैर्नाटकैः प्रतीयते यत् प्राक् ख्रीष्टाब्दे चतुर्थे पञ्चमे वा शतके नाटकानां विकसिता अवस्था आसीत्। ख्रीष्टोदयात् १९५वर्षाणि पूर्वरचिते पातञ्जले महाभाष्येऽपि 'कंसवध-

बलिवध'नाम्नोर्नाटकयोरुल्लेख उपलभ्यते। नागपुरपर्वतप्रदेशेषु च नाट्यशास्त्र-वर्णित-प्रेक्षागृहसदृशी काचित् नाट्यशाला उपलब्धा। तस्या कालश्च ख्रीष्टोदयात्पूर्वं द्वितीयं शतकमवतर्क्यते। संस्कृत-नाटकानाञ्च प्रकृष्टा परिमार्जिता चावस्था ख्रीष्टात्पूर्वं प्रथमशतकीयेषु कालिदास-ग्रन्थेषु उपलभ्यते।

धर्मप्रभावः—रूपकोत्पत्तौ धर्मस्य महती प्रेरणा। प्रथमं नाटकं स्वर्गे धर्मोत्सवावसरे एव अभिनीतं बभूव। शैव-वैष्णवादि सम्प्रदायप्रवर्तितैः तैस्तैः धर्मकर्मानुष्ठानैः नाटकाभ्युदये महान् उपकारः कृतः।

एवं संस्कृतनाटकानां क्रमिकविकासे वैदिकसाहित्यस्य पुराणेति-हासयोः, लोकगीतानां वा तत्त्वानि प्रभूतं साहाय्यमकुर्वन्। धार्मिकैः सामूहिकोत्सवैरपि तस्य विकासे योगो दत्तः। एवन्निखिलेनाऽनेन ज्ञायते यत् संस्कृतनाटकानां परम्पराया सुदीर्घेण कालेन विकासोऽभूत्।

---

## चाक्षुषः क्रतुः

देवानामिदमामनन्ति मुनयः क्रान्तं क्रतुं चाक्षुषं,
रुद्रेणेदमुमारतिव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते,
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्॥

(मालविकाग्निमित्रात्)

# ·भाषासु मुख्या मधुरा गीर्वाणभारती

मोरेश्वरपराडकरः*

एकस्मिन् दिवसे आकाशवाणीं श्रोतुमना अहं रात्रौ नववादनानन्तरमशृणवम्—

भाषासु मुख्या मधुरा गीर्वाणभारती ।
पुष्पाञ्जलिरयं तस्याः रसिकेभ्यः समर्प्यते ॥

तदाहं मनस्यचिन्तयम्—'कीदृशमेतन्मुख्यत्वं मधुरत्वं च गीर्वाणवाण्याः। किमेतत्सत्यमथवाऽर्थवादोऽयम्। केनचिज्जिज्ञासुना यद्यस्मिन्विषये पृष्टं तर्हि किमुत्तरं दातव्यम्' इति विचारव्यापृतेन मया तत्र यच्चिन्तितं तच्छ्रोतुमर्हन्ति गीर्वाणवाणीरसिकाः।

प्रथमं तावन्मधुरत्वमेव चिन्तितव्यम्। अस्मिन् विषये सर्वेषां विदुषां ऐकमत्यमेव संजायेत इति मे मतिः। कविकुलगुरुणा कालिदासेन यस्यां भाषायां रघुवशादीनि काव्यानि अभिज्ञानशाकुन्तलादीनि नाटकानि च लिखितानि तस्या मधुरत्वं सर्वैरेवानुभूयते। महत्खलु सौभाग्यं यज्जयदेवेन 'गीतगोविन्द' नाम मधुरमधुरं काव्यमस्यां भाषायामेव विरचितम्। अयं कविः काव्यस्य प्रारम्भे पाठकान् सविश्वासं सोत्साहं च प्रार्थयति—

यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम्।
मधुरकोमलकान्तपदावलिं शृणु तदा जयदेवसरस्वतीम् ॥

जयदेवेन प्रणीता 'मधुरकोमलकान्तपदावलिः' अस्मद्देशीयाभिः बंगला-हिन्दी-आदि भाषाभिरपि सादरमङ्गीकृतेति सर्वे जानन्त्येव। अतो नायं विवादविषयः।

मुख्यत्वविषये तु महान् विवादो वर्तते। मराठी-गुजराती-आदिदेशीया भाषा आश्रित्य साम्प्रतं वयं सर्वे व्यवहरामः। तासु गौणत्वमेवोररीकर्त्तव्यम्। अपरं च खण्डप्रायेऽस्मिन् भारतवर्षे 'हिन्दी' इत्याख्यायाः राष्ट्रभाषायाः महत्त्वमान्तरप्रान्तीयस्य व्यवहारस्य सौकर्यार्थं स्वातंत्र्यप्राप्तेरनन्तरमस्माभिरेव शिरसि कृतम्। यदि गीर्वाणवाण्या महत्त्वं मुख्यत्वं वा साम्प्रतं जोघुष्यते तर्हि राष्ट्रभाषायाः विकासनमेवापतति, किं तच्छ्रेयसे कल्पेतेत्ययं प्रश्नोऽपि तत्र समुद्भवति। यदि देशीयाः भाषाः राष्ट्रभाषा वा प्राथम्येनाङ्गी-

*एम.ए., पी-एच.डी.

कर्त्तव्या तर्हि संस्कृतभाषायाः गौणत्वमपरिहार्यं मुख्यत्वमानुषङ्गिकमित्येव वक्तुमुचितमिति प्रतिभाति ।

विवादेऽस्मिन् कैश्चित्संस्कृताभिमानिभिर्गीर्वाणवाण्याः सोत्साहं समर्थनं क्रियते । मराठी-गुजराती-आदिभिः सार्धं 'हिन्दी' इत्याख्या भाषाऽपि राष्ट्रभाषा-पदं नार्हति । तत्सर्वथा गीर्वाणभाषायै दातव्यमित्येतेषां मतम् । एतत्सर्वमैकान्तिकमिति मे प्रतिभाति । संस्कृतभाषा सामर्थ्यसंपन्ना, मधुरा, तदात्वे भारतीयानाम् ऐक्यप्रतिपादने सहायभूता चेत्यत्र नास्ति संदेहलवोऽपि । किन्तु बहुवर्षमस्माभिर्व्यवहारान्निष्कासिता वर्तते । अत एव नित्यनूतना प्रतिक्षणं संकुला च ये व्यवहारा अस्माकं ते तामाश्रित्य न सम्भवन्तीत्यत्र न किमपि विस्मयावहम् । यदीदृशः प्रयत्नोऽस्माभिः क्रियते तर्हि वयं सर्वे ख्रिस्ताब्दस्य त्रिषष्ट्युत्तरैकोनविंशेऽस्मिन् संवत्सर उपहास्यतामेव गमिष्यामः ।

यद्येतत्सत्यं तर्हि गौणमुख्यन्याये मुख्यमेवाङ्गीकर्त्तव्यमिति न्यायेन शालासु विद्यालयेषु गौणीभूतायाः संस्कृतभाषायाः अध्ययनं नैव कर्त्तव्यमित्येव पर्यवस्यतीति चेन्न । स्वतन्त्रे भारतवर्षे तदतीवावश्यकं सञ्जातमिति मे मतिः । अद्यावधि महाविद्यालयेष्वांग्लभाषैव शिक्षाद्वारत्वेनाङ्गीकृताऽऽसीत् । आंग्लभाषा निःसंशयं संपन्ना रुचिरतरा च । किन्तु सा जेतॄणां भाषा, तस्याः दास्यमस्माभिस्त्वरिततरमेव विहातव्यम् । तत्र देशीया भाषा अवश्यं स्थापयितव्याः । आन्तरप्रान्तीये व्यवहारे तु 'हिन्दी' इत्याख्या राष्ट्रभाषा प्राथम्येन स्वीकर्त्तव्येति प्रायः सर्वैः प्राज्ञमानिभिरनुमन्यते । अस्मिन्विषये तु संस्कृतभाषैवास्माकं सहायभूता सम्पद्येत इति महान् मे विश्वासः ।

प्रथमं तावत्संस्कृतभाषायाः सञ्जीवनीं शक्तिमवलोकयितुमर्हन्ति भवन्तः । शास्त्रप्रधानं चैतद्युगम् । अत्र रसायनस्थापत्यादिषु विविधेषु शास्त्रेष्वेव प्रगतिः कर्त्तव्या । तेषु यानि यानि पुस्तकानि साम्प्रतमुपयोक्ष्यन्ते तानि सर्वाण्यांग्लभाषायामेव लिखितानि सन्ति । प्रथमं तेषामनुवादः मराठी-गुजराती-हिन्दी-आदिभाषासु कर्त्तव्यः तदनन्तरं तासु मौलिका ग्रन्था अपि प्रणेतव्याः । अत्र संस्कृतं विहायास्माभिरेकपदमपि गन्तुं न शक्यते । नवीनानामन्वर्थकानां शब्दानां निर्माणे गीर्वाणवाण्येवास्माकं

शरणम्। तत्रोपसर्गाणां साहाय्यमवश्यमापादनीयम्। का नामोपसर्गेषु शक्तिरित्येतद्यदि पृच्छ्यते तर्हि श्रूयतामयं श्लोकः।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहारसंहारविहारपरिहारवत् ॥

अत्र 'प्र-आ-सं-वि-परि' इत्येतान्पञ्चोपसर्गानाश्रित्यैकेनैव धातुना बहवोऽर्थाः प्रतिपादिताः। उपसर्गान्तर्गतामेनां शक्तिमवलम्ब्यैव वयं तासु देशीयासु भाषासु विविधानामर्थवाहकानां शब्दानां निर्माणे समर्थाः संपद्येमहि। अन्यथा दुस्तरमेवेदं परिभाषायाः निर्माण-कार्यम्। अतः संस्कृतभाषोपजीव्या। तामाश्रित्यैव सर्वा इदानींतन्यो भाषाः समृद्धाः सम्पन्नाश्च भवेयुः।

अत्रापरमपि वक्तव्यमस्ति। संस्कृतभाषायां पुरातनाः शास्त्रीया ग्रन्था अपि प्रणीताः सन्ति। राजनीतिविषये कौटिल्यविरचितमर्थशास्त्रं वैद्यकविषये सुश्रुतचरकादीनां महानुभावानां तथा भूमितिगणितविषये भास्कराचार्यादीनां मनोषिणां ग्रन्था अप्यवश्यमध्येतव्याः। तेभ्यश्च अन्वर्थकानां शब्दानां पुनरुज्जीवनम् अस्माकं प्रमोदायावबोधाय च संजायेतेति मे मतम्।

तृतीयं तु संस्कृति-रिक्थस्य रक्षणम्। तदपि संस्कृतभाषाया अध्ययनेनैव सम्पद्यत इत्यत्र नास्ति स्तोकोऽपि संदेहः। नवीनस्य निर्मितिरपि परम्परामाश्रित्यैव सुकरा सुदृढा च भवतीति विद्वद्भिरवधारितम्। पश्चिमीयैः पण्डितैरपि 'लाटिन' इति ख्यातायाः भाषाया अध्ययनमेतदर्थमेव क्रियमाणं दरीदृश्यते। 'लाटिन' भाषया आंग्लभाषायास्तदात्वे यदुपकृतं तस्मादप्यधिकतरं नो व्यवह्रियमाणा भाषा गीर्वाणवाण्या उपकृताः सन्ति। वर्तमानकालेऽपि सा उपकुर्वन्ती दृश्यत आगमिनि कालेऽपि सैवोपकर्तुं प्रभविष्यति। एतदेव गीर्वाणवाण्या मुख्यत्वं मनस्यवधार्यास्माभिर्यदि सुचिरं प्रयत्यते तर्हि मराठी-गुजराती-हिन्दीप्रभृतयः भारतीयाः भाषा उत्कर्षस्य पराकाष्ठामवश्यं प्राप्नुवन्ति। अत एव संस्कृतभाषाया विरोधो न श्रेयान्। तस्या विवेकपूर्ण आदर एव नः कल्याणाय प्रभवेदिति निवेद्य समन्वयार्थं वैदिकीं प्रार्थनामेव व्याहरामि—

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥

---

१. संस्कृत-विभागाध्यक्षः, मीठीबाई महाविद्यालयः, पार्ले (पश्चिम), बम्बई।

# चार्वाक-दर्शन-तत्त्व-मीमांसा

( गताङ्कादग्रे )

इन्द्रदत्त 'उनियालः'*

**ऐतिह्यप्रामाण्यविचारः**—प्रसङ्गसङ्गत्या साम्प्रतमैतिह्यमङ्गीकृत्य किञ्चिद्विलिख्यते, निराक्रियते च। ऐतिह्यं हि नाम तद् यत्रेतिहासस्य प्रामाण्यं स्वीक्रियेत। परं विचार-युक्त्या न तत्र भावसाधकत्वं ज्ञानजनकत्वं वा प्रामाण्यं तथाभ्युपगम्यते यथा तत्पक्षपातिभिरानिमीलितनयनैः प्रतिपाद्यते। तथाहि प्रथमं तावदेतद् विचारणीयं यदितिहासे कस्य प्रामाण्यमभीष्टं ग्रन्थस्य तल्लेखकस्य आहोस्वित् तदुच्चारकस्य? आद्येऽपि शब्दानां वा तत्र वर्णित-पदार्थानां वा? प्रथमे हि रचनाविशेषरूपानुपूर्व्या तेषामनित्यत्वेनार्थ-परकत्वेन वा तद्विशिष्टवाक्यस्याप्यनित्यत्व-प्रसङ्गात्कथं प्रामाण्यम्? द्वितीयेऽपि तेषां तदानीं वर्तमानकालावच्छेदेन वर्ण्यमानत्वादिदानीं सत्यपि वर्तमानकाले तत्कृते भूतकालत्वेऽत एव कालकलनयाऽसत्त्वे सङ्केताभावात् कथं तादृग्ज्ञानोपलब्धिः? कथं वा 'ज्ञातो मयाऽयं पदार्थः' 'पदार्थज्ञानवानहं वे'त्याकारकं विशिष्टं ज्ञानं स्यात्? ज्ञानाभावे च कथं प्रामाण्यं स्वीक्रियेत्। तदानीं पठ्यमानस्य वर्ण्यमानस्योपदिश्यमानस्य वा वस्तुनः सर्वथाऽभावात्, सर्वानुभवासिद्धत्वादन्यथैवोपलब्धेश्च कथं पदार्थ-प्रामाण्यम्? अत उभयथा ग्रन्थस्य प्रामाणिकत्वमनायासेनैवासिद्धम्।

ननु लेखकस्यैव प्रामाण्यं स्यादिति चेत् तदपि न। स हि जीवितो मृतो वा? जीवितेऽप्यनाप्त आप्तो वा? अनाप्तश्चेत् कथं तस्य वचांसि प्रामाण्यमधिगच्छेयुः? आप्तोच्चारितं वाक्यमेव हि तथाऽङ्गीक्रियतेऽन्यथा सर्वेषामेव लौकिकवाक्यानां प्रामाण्यापत्तिः। आप्तश्चेत् तदपि न, आप्तो हि प्रकृतवाक्यार्थ-विषयक-यथार्थज्ञान-प्रयोजक-शब्दोच्चारणकर्ता स्यात्, येन च तत्र 'आप्तवाक्यं शब्दः, आप्तस्तु यथार्थवक्ते'ति लक्षणं संघटेत। एवञ्च शब्द-प्रमाण एवास्यान्तर्भावो न तु पृथक् प्रामाण्यम्, उभयोरैक्यापातात्।

ननु मा भूदन्येषां प्रामाण्यमुच्चारकस्यैव तत्स्यादित्यपि न वाच्यमनेकविधदोषप्रसङ्गापत्तेः। उच्चारणं हि शब्द-प्रयोगानुकूलो

---

* एम. ए., साहित्य-दर्शनाचार्यः, प्राध्यापकः, वि. वैदिक-शोध-संस्थानम्।

व्यापारः । अतस्तत्कालीनतत्पुरुष-प्रतिपादितं किञ्चिद् वस्तु कालविशेषे पुरुषविशेषः शक्तिभ्रमेणाज्ञानविजृम्भणेन वाऽन्यथैव प्रतिपादयेत् न चावबोधयेद् वा, कथन्नाम तत्र, तस्य प्रामाण्यं केवलं शब्दप्रयोगानुकूल-व्यापारवृत्तेः ।

मृतश्चेत् तत्कृतग्रन्थस्यैव प्रामाण्यं भवेत्, परं यथा न भवति ग्रन्थमात्रस्य प्रामाण्यं तथा पूर्वमेव निरस्तम् ।

ननु मा भवतु भविष्य इतिहासस्य प्रामाण्यं यदा तु विलिख्यते तदा तु सुतरामेव तस्य प्रामाण्यं स्यात्, पदार्थज्ञानसाराभिहितत्वात् तत्तत्पदार्थतावच्छेदकभावसत्वाच्चेत्यपि नाऽऽशङ्कनीयम् । तदानीं हि तेषामिन्द्रियसम्बन्धसत्त्वेन प्रत्यक्षसिद्धत्वात् प्रत्यक्षप्रमाणेनैव मतार्थत्वाच्च ।

अतो नैवमैतिह्यस्य प्रमाणान्तरत्वं स्वीकर्तुं पार्यते । तथा चोक्तमपि कमलशीलेन—

ऐतिह्य-प्रतिभादीनां भूयसा व्यभिचारिता ।
नैवेदृशां प्रमाणत्वं घटतेऽतिप्रसङ्गतः ॥ (तं.सं. श्लोक १७००)

अतश्चार्वाकैरपि यदि नाङ्गीक्रियते प्रामाण्यमैतिह्यस्य तर्हि किमपराद्धम् ?

**सम्भवः**—नापि सम्भवस्य प्रमाणार्हताऽनिष्टापत्तेः । सम्भवो हि नाम संभावना, यथा सम्भवति वृष्टिः स्यात्, मेघोन्नतया इति । किन्त्वेतावन्मात्रकल्पितस्यानिश्चयात्मकज्ञानप्रतिपादकस्य स्वतन्त्रप्रमाणत्वं वक्तुं शक्यते । त्रिविधानुमानेषु कारणं विलोक्य कार्यानुमानं यत्र प्रतिपाद्यते तत्रैवास्यान्तर्भावात् । स्वीकृते तस्य प्रामाण्ये स्थाणुर्वा पुरुषो वेति द्विविधज्ञानप्रसङ्गकाले सन्देहस्य 'स्थाणुरेव नायं पुरुषः' इत्येवं निश्चितज्ञानप्रसङ्गकाले निश्चयस्यापि प्रामाण्यं स्यात्, नहि सन्देहस्य प्रत्यक्षे अन्तर्भावः सुशकः निश्चयात्मकज्ञानाभावात्, न वानुमाने व्याप्तिज्ञानाभावात्, न चोपमाने तस्य हि उपमितित्वावच्छिन्नकार्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणत्वेन स्वीकारात् । एवञ्चोपमाने 'गोसदृशो गवयः' इति श्रुत्वैव श्रोता निरुक्त-शब्दबोध-जन्यतत्समानाकारसंस्कारात्, गोसादृश्यविशिष्ट वस्तु-दर्शनेच्छारूपोद्बोधकसहकृतात्, जायमानगोसादृश्यावच्छिन्न-विशेष्यक-गवयपदवाच्यत्व-प्रकारकस्मृतिधाराविशिष्टः सन् अरण्यं

प्रविशति प्रविश्य च तत्र सादृश्यरूपविशेषणज्ञानात्मकतादृश-स्मरणसहकृतात् सास्नादिमद्रूपगोसादृश्यप्रकारकगोभिन्न-वस्तु-विशेष्यक-प्रत्यक्षवान् भवति। सन्देहे च तथाविधज्ञानाभावात्। न वा शब्दे,तस्य तु आप्तोच्चारित वाक्यत्वेनैव स्वीकारात्। न वार्थापत्तौ, तत्रापि 'अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तर-कल्पनमिति लक्षणाङ्गीकारात्। एवं सन्देहस्यापि प्रामाण्यं केनापाकृतं भवेत्। परन्नैव समेषामेव प्रामाणिकत्वं स्वायत्तीकर्तुं पार्यते। अतः स्वीकृतेष्वेव प्रमाणेष्वेतादृशां सम्भावित-प्रमाणानामन्तर्भावः। अतः सम्भवस्यापि न पृथक् प्रामाण्यमपित्वनुमान एवान्तर्भावः। अनुमानेनैव वस्त्वनुमापयतीति व्यक्तमेव तस्यानुमानत्वम्।

**अर्थापत्तिः** – तिष्ठन्तु नामैतानि प्रमाणानि येषां खण्डनमकारि परमर्थापत्तिस्तु पृथक् प्रमाणमस्ति। तथाहि—अर्थापत्तिर्हि 'अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पनम्' (तर्कभाषा) 'अनुपपद्यमानेनार्थेनोपपादककल्पनम्। यथा वृष्ट्या मेघज्ञानम् (गौ. वृ. २,२,१)। अन्येषां च उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः। तत्रोपपाद्यज्ञानं कारणम्। उपपादकज्ञानञ्च फलम्। येन विना यदनुपपन्नं तत्तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत्रोपपादकम्। यथा पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनेन विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति पीनत्वमुपपाद्यम्। यथा वा रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम्।

सा चार्थापत्तिः द्विविधा दृष्टश्रुताभ्याम्। दृष्टार्थापत्तिर्यथा—इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वे सति अनुपपन्नमिति रजतस्य मिथ्यात्वं कल्पयति।

**श्रुतार्थापत्तिः**— यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनमिति। एवं लक्षणलक्षितताया अर्थापत्तेर्नहि प्रत्यक्षादिष्वन्तर्भावः। अतोऽर्थापत्तिरवश्यमेवांगीकरणीयेत्याकूतयन्ति मीमांसकवेदान्तिनो विचक्षणाः। परन्नेदं विचारपेशलम्; नार्थापत्तेरपि स्वातन्त्र्येण प्रामाण्यमङ्गीकर्तुं शक्यते, अनुमानस्य व्यतिरेकभेद एव तस्या अन्तर्भावात्। वेदान्तिनो मीमांसकाश्चानुमानस्य न व्यति-

रेकभेदं स्वीकुर्वन्ति येन तैरस्याः पृथक् प्रामाण्यं स्वीक्रियत इति दिङ्मात्रम्। विस्तरेण तु न्यायग्रन्थेषु कमलशीलकृततत्त्वसंग्रहादिषु च प्रतिपादितमिति तत्रैव द्रष्टव्यम्।

इदञ्चापरमत्र किञ्चिद् विचारणीयम् कथन्नाम् तत्रानुमानमपि सम्भवेत्। 'पीनो देवदत्तः दिवा न भुङ्क्ते' उदाहरणेऽस्मिन् व्यतिरेकानुमानेन रात्रिभोजनोपकल्पनं विधीयते परन्नैतदनुरूपमनुमानस्यापि। तत्र हि व्याप्तिज्ञानस्य परमावश्यकत्वात्। न ह्यत्र पीनत्वभोजनयोरन्वयव्यतिरेकिभावो दृश्यते। अहोरात्रं भुञ्जानस्यापि शरीरे कार्श्य-विलोकनात् अभुञ्जानस्याप्यौषधादिविशेषेण स्थौल्यदर्शनात्।

अन्यच्च, पीनो देवदत्तः प्रथमं तावदत्र प्रत्यक्षं विधीयते, तदनन्तरं 'दिवा न भुङ्क्ते' इति स्थाप्यते, परं दिवा भोजनाभावे किं मानम् आप्तवाक्यं प्रत्यक्षं वा ? आप्तवाक्यञ्चेत् आप्तेनापि तस्य भोजनाभावः कस्माच्छ्रुतः कथं वा प्रत्यक्षीकृतः, श्रुतश्चेदनवस्था-दोष-दुष्टता न केनाप्यपाकर्तुं शक्यते। प्रत्यक्षीकृतश्चेत् किं तत्र भोजनाभावक्रियायाः कारणम्, देवदत्तेन प्रतिज्ञातं वा केवलं वञ्चयति वा। यदि प्रतिज्ञातं तदा यथा दिवा न भुङ्क्ते तथैव रात्रावपि आहारं विनैव स्थास्यति तादृग्-दृढप्रतिज्ञाङ्गीकारात्, 'नहि तदानीं रात्रिभोजनस्य तदुपकल्पनस्यानुमानस्य वावश्यकत्वम्।

अन्यान् वञ्चयितुमेव च तेन तथा क्रियते चेत् यथा दिवा निरीक्ष्यते तथैव रात्रावपि कथन्न तस्य निरीक्षणं क्रियते कथन्नाम वा तत्रोपकल्पनमात्रं विधीयते। दिवसेऽपि न निरीक्ष्यते इत्यपि न वक्तुं शक्यते दिवा न भुङ्क्ते इति प्रतिपादनात्।

अपरञ्च वह्निधूमयोरिव महानसे दिवाऽभुञ्जानस्य पीनस्य रात्रिभोजनेन साकं केन कुत्र साहचर्यं विहितम् येनानुमानविषयता समापतेत्। साहचर्याभावे व्याप्तेरभावः साहचर्यनियमो व्याप्तिरिति लक्षणसत्त्वात्। अत एतादृशेषु स्थलेषु प्रत्यक्षस्यैवावश्यकत्वं नत्वनुमानादीनामन्यथा सर्वत्रानिष्टापत्तिः स्यात्।

अपरश्च 'नेदं रजतमि'ति कथनमात्रेण रजतस्य मिथ्यात्वकल्पनमपि नोचितम्। सत्येऽपि वस्तुनि मनसाऽनवधारणाद् विद्यमानस्यापि वस्तुनो मिथ्यात्वप्रसंगो भवेत्। एवं भ्रान्त्यादिस्थलेष्वप्यनिष्टापत्तिः समापतेत्। अतो नार्थापत्तेः प्रामाण्यं संघटते इति चार्वाकाः कथयन्ति चेत्किमत्र तैरपराद्धमन्यैरपि तथाविधोपकल्पनात्।

(क्रमशः)

# विनोद-कणिकाः

भारद्वाजः

## बाधा न साधारणी

रेङ्कार-ध्वनिनाऽऽह्वयन् पुलकितो मामागतो वल्लभः
प्रत्युद्यानि कथं ? कुलाल-हतकः पृष्ठे सदण्डः स्थितः ।
लत्ता-नर्त्तन-पण्डिताऽप्यपटुतां याता भरेणार्दिते-
त्येवं ताम्यति यत्तु गर्दभ-वधूर्बाधा न साधारणी ।।

## व्याख्या

विरक्तशिष्यः ( भगवद्गीताया द्वितीयं श्लोकं पठित्वा )— गुरो ! अस्य श्लोकस्य 'राजा वचनमब्रवीत्' इति चरणो राम-परिवारे कथं सङ्गच्छते ?

विरक्तः— रे मूर्ख ! एतदपि न जानासि ? अत्र राजा खलु रामः भवति, 'वचन' इत्येतावान् लक्ष्मणः, मब्रवी तु सीता ।

शिष्यः— तर्हि हल् तकारः ?

गुरुः— अरे ! हल् तकारोऽसौ खन् हनूमान् । द्रोणाद्रेः संजीवनी-मानयन् साकेतस्योपरिष्टाद् गच्छन् स भरतेन ताडितः पादेन खन् जातः । तस्माद् हलन्तेन सूचितः सः ।

## विवशता

ग्रामीणः— (पठितं प्रति) भद्र ! पत्रमेकं लेखयितुमिच्छामि ।

पठितः— बन्धो ! कथं लिखानि ? पादे मे महती वेदना वर्तते ।

ग्रामीणः— वेदना तव पादे वर्तते न तु करे । ननु करेण लिख !

पठितः— अरे ! तात्पर्यं नावबुध्यसे । मया लिखितं न कोऽपि वाचयितुं क्षमः । तदा वाचनाय मयैव गन्तव्यं भवेत् । पादवेदनया च न तत्र गन्तुं शक्यते । नातो लेखितुं प्रभवामि ।

## विस्मयः

चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः ।
नाहं गतो न मे भ्राता कस्येदं हस्त-लाघवम् ! ।।

---

# भारतीयसमाजे नार्याः स्थानम्

कु० शशि भटनागरः*

कस्यचिदपि देशस्य, जातेः, सभ्यताया वा निर्धारणं तदीयां सामाजिकीमवस्थां दृष्ट्वैव कर्तुं शक्यते। समाजस्य निर्माणं व्यक्तिभिर्भवति। व्यक्त्या च स्त्री पुरुषश्चेमावेव गम्येते। प्रस्तुते निबन्धे केवलं नारीसमाजमेवाङ्गीकृत्य विचार्य्यते।

नारी मानवसमाजस्याधारशिला वर्तते। केषाञ्चिद् विदुषां तु एतदपि मतं यद् यस्य कस्यापि देशस्य सभ्यतामवगन्तुकामैः सर्वप्रथमं तत्रत्ये नारी-समाजे दृष्टि-पातो विधेयः। यस्मिन् देशे नारी सम्मानिता स्यात् तस्या अधिकाराः पुरुषस्येव स्युः, स एव देशः सभ्यत्वेन गणनामर्हति। विपर्यये तु असभ्यतयैव गण्यः।

भारतीयसमाजे नार्याः स्थान-निर्धारणात् प्राक् तस्या अतीतावस्थाया अवलोकनमावश्यकम्। प्राचीनकाले समाजे नार्या अवस्था अत्युत्तमा आसीत्। सा सामाजिक-कार्येषु पुरुषस्य सहयोगिनी सहधर्मिणी चावर्तत। सा आध्यात्मिकधनस्यापि अधिकारिणी भवति स्म। तामन्तरेण हि न धर्मानुष्ठानं पूर्णममन्यत। सीताया निर्वासनानन्तरं श्रीरामोऽश्वमेधं तस्याः सुवर्णमयीं प्रतिमां पत्नीत्वेन यज्ञमण्डपे प्रतिष्ठाप्यैव पूर्णतां नेतुं प्राभवत्। राजसभासु विद्वत्समाजेषु च नार्यः पुरुषान् वादेषु पराजिग्यिरे। उपनिषत्सु गार्ग्या नाम लक्ष्यते या जनकनृपस्य सभायाम् ऋषीणां समक्षं शास्त्रार्थेन ब्रह्मवादिनं याज्ञवल्क्यमतूतुलत्। न केवलं विद्याध्ययनेऽभिषेककाले वा सिंहासनार्धे अपितु रणक्षेत्रेऽपि नारी पत्युः सहवर्तिनी बभूव। कैकेयी स्वपत्युः दशरथात् वरद्वयं युद्धक्षेत्र एव प्राप्नोत्। दुर्गाऽपि चेदं प्रतिज्ञातवती—

यो मां जेष्यति संग्रामे यो मे दर्पं व्यपोहति।
यो मे प्रतिबलो लोके स मे भर्ता भविष्यति॥

* एम. ए., १म वर्षम्, वि. वै. शोध-संस्थानम्।

अनेकान् राक्षसान् च सा अहन् । पुरातनी नारी पतिं पुत्रांश्च उपदेष्टुं समर्थाऽभवत् । द्रौपद्या उद्योजकेन उपदेशेनैव पाण्डवा कौरवैः सार्धमयुध्यन्त । मदालसायाः स्वपुत्राय प्रदत्तः "शुद्धोऽसि बुद्धोऽसि निरञ्जनोऽसि संसारमायापरिवर्जितोऽसि" इत्याकार उपदेशो वेदान्तशास्त्रस्य शिक्षां प्रकटयति । वेदमन्त्राणां कर्तृत्वेन ऋषि-कोटावपि तासां गणना विधीयते यासु च लोपामुद्रा, यमी, श्रद्धा, घोषा, विश्ववारा इत्याद्याः ख्यातिप्राप्ता आसन् । ब्राह्मणग्रन्थेष्वपि नारीणां महत्त्वपूर्णानि वर्णनानि प्राप्यन्ते । तात्पर्यमिदं यत् तस्याः पदं तस्मिन् काले पुरुषेभ्यो नाल्पमपि अवहीयते स्म । अतएव च मनुना—"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता" इत्याद्युक्तमिति मन्ये ।

परं कालगत्या सह शनैः शनैः सा सर्वमपि परिवर्तनमन्वभवत् । अस्माकं धर्मस्य नियमाः कठोरतामस्पृशन् । पूर्वं स्वतन्त्रा नारी न केवलं समाजेऽपितु धर्मेऽपि विविधनियमनिगडितया शृङ्खलया दिने-दिने पारतन्त्र्यमगात् । तदा न सा समाजे सम्मानं स्थातुं प्राभवत् नापि च स्वकीयान् विचारान् प्रकटयितुमकल्पत । तस्याः शिक्षणं पापपक्षे क्षिप्तम् । अनेके नियमा अप्रथन्त यैः किल कोमलाङ्ग्यां नार्यां नितरां नैष्ठुर्यं व्यवहृतम् । तदानीं सा केवलं असूर्यम्पश्या गृहकुम्भदासीत्वमभजत् । तस्या उन्नत्याः क्षेत्रं सर्वतोऽवरुद्धम् । सा अशिक्षिता, अबला, असहाया च पादधूलिरिव सर्वत्रापि निरादरं लेभे ।एवं नारी सर्वथा परतन्त्रा पुरुषश्च स्वतन्त्रोऽभवत् । स्थितिरियं च न केवलं साधारणैर्जनैरुत्पादिता अपितु याज्ञवल्क्यसदृशो मुनिरपि अघोषयत्—

> पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
> पुत्रश्च स्थविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥

नारी पुरुषैः स्वमनोऽनुरूपं विचारिता, निरीक्षिता व्यवहृता च । सा तु क्षमाशीला सर्वमपीदं तूष्णीमसहत ।

हन्त ! या नारी नराय स्व-हृदयं वरदानमिव समर्पितवती तस्यामेव पुरुषो निजपुरुषत्वमोहमूढः स्वाधिकारमदर्शयत् । याचितेषु च तयाऽधिकारेषु नरस्तां धर्मोपदेशं मनोरञ्जनं मोहकं, संगीतं, श्रावयित्वा तथा अमूमुहत् यथा सा पुरुषमेव ईश्वरत्वेन स्वीचकार ।

तस्य मरणमनु च स्वजीवनमपि समर्पयन्ती नारी समाजे सतीति मानस्य पात्रमभवत् येन च कालान्तरे जघन्या सती-प्रथा स्त्रीसमाजे प्रतिष्ठां प्राप। एवं तस्या दशा उत्तरोत्तरं शोचनीयतामगात्।

नैतदेव, सन्तोऽपि नारीं मायां मन्यमानाः साटोपं साक्षेपं च धर्मस्य विघ्नत्वेन तामाक्रोशन्। मोक्षमार्गे च सा कण्टकायिता अघुष्यत। एतत् सर्वं च निम्नस्थितया कबीरोक्त्या स्फुटीभवति—

चलो चलो सब कोई कहे, पहुंचे विरला कोय।
एक कनक अरु कामिनी, दुर्गम घाटी दोय॥

सन्तशिरोमणिः तुलसिदासोऽपि स्वविरचिते रामचरितमानस एवं व्यलिखत्—

ढोल गंवार शूद्र पशु नारी।
ये सब ताडन के अधिकारी॥

परं परिवर्तिनि समये किं न बोभवीति? इति सुचिरं बहुधा पीडितोऽपि नारीसमाजः पुनः जागरूकोऽभवत्। नारी दुर्गेव सरसं भयदं च निजं तदेव रूपमधारयत्। सा अतीतावस्थाया स्वप्नं प्रतिक्रियारूपेण वर्तमानकाले फलयितुमयतत। चिरं परतन्त्रताशृङ्खलया बद्धा नारी पुनः स्वतन्त्रतां प्राप्तुं कार्यक्षेत्रं प्रति अधावत्। न केवलमात्मनो देशस्यापि स्वतन्त्रताया अभिलाषायां सा पुरुषस्य अग्रेसरतामगच्छत्। विद्यायां, धर्मे, कर्मणि, समाजे किं बहुना, सर्वास्वेव दिक्षु सा स्वातन्त्र्यं वाञ्छन्ती सर्वेषां प्रबलं रूपमङ्गीकुर्वन्ती अवातरत्। उदाहरणतया च झांसीशासिका साक्षाल्लक्ष्मीरिव लक्ष्मीः प्रथमे स्वातन्त्र्ययुद्धे गौराङ्गान् कृपाणेन कालकवलीचकार। पश्चाच्च सरोजिनीनायडू-विजयलक्ष्मीपण्डिताप्रभृतयोऽन्याश्च महिलाः स्वाधीनतासङ्ग्रामे समाजोन्नतिक्षेत्रे च यदसाधारणं कर्माऽकुर्वन् को नामाल्पधीस्तदवगणयेत्?

इदानीं भारतीया नारी पूर्णरूपेण जागरूका सती विद्यायाः क्षेत्रे देशभक्त्याः मार्गे, राज्यकार्ये चापि स्वकीयं स्थानमधिकुर्वन्ती गच्छति। अवगुण्ठनप्रथाया अन्तो जातः। विवाहबन्धनान्यपि शिथिलतां व्रजन्ति। केवलमुपभोगवस्तु इयमिति लघ्वी भावनाऽपि शनैः शनैर्लुप्ता भवति।

परं पुरुषैः कृतानामत्याचाराणां प्रतिक्रिया नार्यां तथा दृश्यते यथा सा स्वकीयं नारीत्वमपि जातु त्यक्ष्यतीति शङ्काकुलं हृदयम्। सर्वत्र स्वातन्त्र्यं मार्गयमाणा सा मर्यादाया देहलीमपि समुल्लंघयति। तस्याः पौरुषमद्य उग्रतां रूक्षतां च फलति। सर्वत्रापि बन्धनं शङ्कमाना स्वकीयं निसर्ग-रमणीयं पावनं रूपं विहाय स्वच्छन्दं वर्तमाना प्रायेण केवलरमणीत्वं भजते; तत्कृता हानिस्तु स्फुटैव। यदि नार्यः कोमलतायाः कलायाः क्षेत्रात् अपसृत्य संघर्षे प्रवृत्ताः स्युस्तदा सौन्दर्यस्य सौम्यतायाः, शान्तेश्च शक्तीः कः प्रवाहयितुं शक्नुयात्? नार्योऽपि नाम विनाशकार्ये प्रवृत्ताश्चेत्तदा नायं संसारो वस्तुं योग्यो भविष्यति। शिशुं प्रति स्नेहेन ममतया च, भर्तारं प्रति प्रणयेन मनुष्यमात्रं प्रति च करुणया कर्त्तव्यपालनेन च नारीजातिः संसारस्य बहूनि दुःखानि क्षमाऽपाकर्तुम्। यदि नारी न भवति तदा संसारोऽनेककष्टानां क्रीडास्थलं भवेत्। पुरुषेण सुखेन श्वसितुमपि दुःशकं स्यात्। संसारस्य निजस्नेहेन सेवा-भावेन च परिपूर्णमेव नारीजीवनस्य साफल्यम्।

सा पुरुषेण सह समानाधिकारं वाञ्छति। अधुना अनेका भगिन्यः संसत्सदस्या निर्वाचिता भवन्ति। राजनीतिकक्षेत्रे तासां गुरु स्थानम्। अधुना न किमपि क्षेत्रं विभागो वा यत्र न नार्या अधिकारः।

परं नार्या इमामद्यतनीमुन्नतिं दृष्ट्वा पुरुषवर्गेण व्याकुलेन न भवितव्यम्। तस्याः प्रगतिरियं सहयोगभावनायां सत्यां न तस्य हानये कल्पेत प्रत्युत उभयोः पारस्परिकसम्बन्धेन देशे सुखशान्त्योः साम्राज्यं भविष्यति।

अत एतदेव कथयितुं शक्यते यत् समाजस्य देशस्य, राष्ट्रस्य वा उन्नतिं कर्तुकामाः सर्वे अपि जनाः साफल्यमभिलषन्ति चेत् तैस्तदा स्त्रीणामपि तथैव स्थानमङ्गीकरणीयं यथा पुरुषाणाम्। न पुरुषाणामेव, स्त्रीणामपि समाजे समानाधिकारेण, समानादरेण च भवितव्यम्।

—o—

# अश्लीलता

रामेश्वरः*

जगति मुख्यतया द्वौ वादौ स्तः। आदर्शवादो यथार्थवादश्च। यदा कश्चिन्निगदति यदश्लीलता परित्याज्या, तदा स आदर्शवादमेवावलम्ब्यैवं भणति। परं "अश्लीलता" संज्ञं वस्तुतो हि नास्ति किमपि तत्त्वम्। मानवनिर्मितैवेयं कल्पना यदश्लीलोऽयमर्थःश्लीलो वा, अश्लीलमिदं दृश्यं, अश्लीलेयं चेष्टेति। नेयं कल्पना ईश्वरनिर्मिता। यदि ईश्वरनिर्मितोऽयं सिद्धान्तस्तदा सर्वेष्वेव देशेष्वश्लीलतायाः स एव मानदण्डः सिद्धान्तश्च स्यात्। परं नैतद् दृश्यते।

तथाहि पश्यामो वयं यच्चलच्चित्रेषु नग्नप्रदर्शनानि विदेशेषु सभ्यतायामन्तर्भवन्ति परन्तु भारतप्रभृतिदेशेषु एतानि प्रदर्शनानि लज्जास्पदानि गर्हितानि च मन्यन्ते। एवमेव फ्रांसजर्मनीत्यादिषु देशेषु काव्यनाटकाख्यायिकादिषु लेखका निर्भीकतया मानवस्य नैसर्गिकीश्चेष्टाः सम्भोगादि च सविस्तरं वर्णयन्ति, परन्तु भारतविधेषु इमानि वर्णनानि कामुकानि चरित्रदूषकाणि च मन्यन्ते। एवं सैद्धान्तिकविभिन्नतामवलोक्य निश्चप्रचं गदितुं शक्यते यदश्लीलतायाः कल्पना मानवकृतैव।

अश्लीलता वास्तविकतायाः पर्यायित्वेनापि गदितुं शक्यते। आदिवासिनां जीवने अश्लीलतायाः कोऽपि विचारो नासीत्। ईश्वरनिर्मिता मानवस्य आदिमावस्था अद्यतन्याः सभ्यतायाः वस्तुस्थितिरासीत्। मानवः कदापि तां दशां विस्मर्तुं न शक्नोति।

आंग्लभाषायाः प्रमुखकविना शेक्स्पीयरेणापि स्फुटीकृतोऽयमर्थः—

"Nothing is good or bad in this world, only thinking makes it so."

अर्थात् न हि किमपि वस्तु जगति शुभमशुभं वा परं बुद्धिरेव तथा चिन्तयति।

---

*शास्त्री, एम. ए. १म वर्षम्, वि. वैदिक-शोध-संस्थानम्।

मानववृत्तिरेव विविधपदार्थेषु विभिन्नास्ववस्थासु च विषये प्रमुखीभूय इदं सुन्दरमसुन्दरं वेति निश्चिनोति ।

अद्यत्वे Formality, इति शब्दो बाहुल्येन प्रयुज्यते । संस्कृतेऽस्य शब्दस्य पर्यायभूतः "उपचारः" इति शब्दो दृश्यतेऽतो निश्चितं भवति यदश्लीलता-प्रदर्शनस्य निषेध औपचारिकतया गौणत्वेन च क्रियते ।

यथार्थवादादर्शवादयोर्महदन्तरं सर्वेषामपि विदुषां ज्ञातमेव । आदर्शवादस्तु बाह्याडम्बरात्मक औपचारिकः तत्त्वाद् दूरतरे च वर्तते । आदर्शवादिनो जना यथार्थं पश्यन्तोऽपि तस्याभिव्यञ्जनेऽक्षमा भवन्ति । परन्तु यथार्थवादिनोऽस्मिन्नेव लोके विचरन्ति ते चादर्शवादव्याजेन निजसत्यभावना नाभिभवन्ति ।

एवमादर्शवादिनां दृष्ट्या याथार्थ्येन प्रस्तुतं वस्तु काममश्लीलत्वेन मतं स्यात् यथार्थवादस्य तु तदभिमतमेव ।

---

२६० पृष्ठस्य शेषः

**दैनिक-दशकर्मपद्धतिः**—श्रीनिवासशास्त्रिप्रणीता पूर्वोक्तप्रतिष्ठानेन प्रकाशिता । शास्त्रिवर्यैर्विधिमुखेन निषेधोऽत्र भङ्ग्योपदिष्टः । हास्यमप्यस्य प्रयोजनं सम्भवेत् । हन्त ! सत्यमिदानीमिमानि कर्माणि यत्र तत्र सर्वत्र दृष्टिपथमवतरन्ति । परमेतादृशं वर्णनं बीभत्सतां स्पृशत् शिष्टजनासम्मतमेव । उपलालनदिशोपदिष्ट उपदेशः सुखावहः सर्वग्राह्योऽनुकरणीयश्च भवति । गूढहास्यजनकतया तु दुर्व्यसनानामेषां प्रतिषेधं साधयत्येवेति नात्र सन्देहः ।

—पीताम्बरदत्तः शास्त्री

# साहित्य-समीक्षा

**श्री महारावल-रजत-जयन्त्यभिनन्दन-ग्रन्थः**— सम्पादिका प्रकाशिका च—ग्रन्थ-सम्पादन-समितिः, डूंगरपुरम् ; राजकीयमष्ट-पृष्ठाकाराऽऽत्मकं संस्करणम् । मुद्रित पृष्ठानि ६५४ ।

प्रस्तुतो ग्रन्थो डूंगरपुरराज्याधिपतेर्महारावलश्रीलक्ष्मणसिंह-महोदयस्य पञ्चविंशतिवर्षावधि सकलप्रजारञ्जनसमर्थितराजपदस्य शासनस्य रजत-जयन्त्युत्सवे प्रजाजनैः स्वानुराग-निर्भरश्रद्धामयेन हृदयेन ग्रन्थसम्पादनसमितिद्वारेण सम्पाद्य मुद्राप्य च विद्यार-सिकाय नृपाय तदनुरूपो बलिरेव समर्पितः। देशस्य परमोच्च-विभूतीनां सम्मानाय प्रकाशितैरेतादृशैरभिनन्दनग्रन्थैः साहित्यस्य भाषायाश्चापि भूयानुपकारो भवति, लेखकानां प्रकाशकानां च यशोवृद्धिर्भवतीति किमु वक्तव्यम् ।

हिन्दी-संस्कृताऽऽङ्गलभाषाऽभिनिबद्धैर्नानाविषयावगाहिभिर्लघुभि-र्दीर्घाकारैश्च नवतिप्रायैर्निबन्धैर्गंभीरां बृहतीमाकृतिं चावहन् ग्रन्थोऽयं क्रमेण साहित्य-दर्शनेतिहास-विज्ञान-समाज-प्रकृतनरेशानु-गतवृत्त-राजनीति-विषयसम्बद्धेषु षट्सु खण्डेषु विभक्तः काव्य-गीत-लेखादिबहुविध-पाठ्यसामग्रीसुरञ्जितः कलेवरस्य प्रतिपाद्यस्य च गरिम्णा पाठकानां हृदयेष्वपि मोदगुरुतामाहरति। न केवलं पूर्वोक्तासु भाषास्वेव, अपितु प्रान्तीय-भाषास्वपि रचनाः संकलयतां सम्पादकानां श्लाघ्योऽयं प्रयत्नः। एतादृश एकस्मिन्नेव ग्रन्थेऽनैकेषां साहित्यकृतां वैज्ञानिकानां च वैदुष्यभरितान् विचारान् पठितुं विविधानज्ञातचरान् राजवंशविषयकानितिहासांश्च वेत्तुं पाठका युगपदेव साधु प्रभवन्ति, अहो महनीयोऽयं महिमा !

काममद्यत्वे सर्वतः प्रवृत्तेन प्रजातन्त्र-झञ्झावातेन प्रविचालिते राजवंशप्रभाव एतादृशीनां राजप्रशस्तीनां नास्ति तादृशः समादरः तथापि तद्व्यपदेशेनान्येऽपि पाठ्यविषयाः पठितुं लभ्यन्त एवेति सिद्धमेवोपकारित्वं तासाम् । ज्ञान-सामान्यस्योपकारित्वे तु न स्यात् कस्यापि प्रेक्षावतः सन्देह-लेशावसरः किं पुनर्विविधविषयावगाहिनो

मनःप्रसादयितुश्च। विशेषेणोपलक्षणे तु स्थालीपुलाकन्यायेन केचिन्निबन्धा अत्रोल्लिख्यन्ते यथा—बनारसीदासचतुर्वेदस्य 'साहित्यिक और सांस्कृतिक स्वराज्य' इति, ज्वालाप्रसादस्य 'पूर्णत्व की प्रतिष्ठा का साधन: काव्य' इति, श्रीनिवासाचार्यस्य 'भारतीय-ललनासु सरसकविता-निर्माण-कौशलम्' इति, इतिहासखण्डे श्रीगलगलीरामाचार्येणानूदितं छत्रपतेः शिववीरस्य जयसिंहं प्रति पद्यात्मकं पत्रम्, डूंगरपुरराजवंशस्येतिवृत्तं सर्वमिदं विदुषां सहृदयानां साधारणपाठकानां च सामान्येन तोषाय। मध्ये-मध्ये विविधैश्चित्रैर्ग्रन्थस्यास्य चारुतोत्कर्षं चुम्बति।

सम्पादने प्रकाशने मुद्रणे चापि सम्पादकानां सौष्ठवाधानाय विशिष्टाग्रह आसीदिति ग्रन्थस्याकारेण सूच्यते। परं काचित्त्रुटिरत्र हृदयमवश्यं स्पृशतीत्यावेदनीयमेव।

तथाहि अभिनन्दनीयशासनस्य राज्ञो विषये पाठकानामवश्यं कुतूहलं भवेद् यस्य शमनाय तद्विषयकवृत्तेन आरम्भ एव भवितव्यम्। एकं पृथक् खण्डं निर्माय तद्गते वृत्ते एकत्र प्रकाशिते स्वरूपं साधुतरं स्यात्। यत्र तत्र मुद्रण-स्खलितान्यपि दृश्यन्त एव।

तथापि विषय-महिम्ना कलेवरगरिम्णा, कमलादिसुषमाभरितेनाकार-धारिणा चाभिनन्दन-ग्रन्थोऽयं स्वयमपि सुतरामभिनन्दनीयः सम्पादन-समितिमन्त्रिणा श्रीगणेशरामशर्मणा सहेति शम्।

—परमानन्द गुप्तः एम.ए.

**श्रीमोहनाभिनन्दनम्**— लेखकः प्रकाशकश्च—श्रीगणेशरामशर्मा, आकारः $\frac{२०\times३०}{१६}$, पृष्ठानि ३१।

पं. श्री गणेशरामशर्मणा प्रणीतं रूपकालंकारालंकृतं सरलसुरगवीसुशोभितं "मोहनाभिनन्दनं" नाम सरसं मधुरं च काव्यमिदं सम्यक्तया निरीक्ष्य परां मुदमासादयति मे चेतः। यस्मात्तन्निष्ठानां महात्मनां कीर्तिस्मरणमपि कल्याणकारकं भवतीति बुद्ध्या लेखकेन लघुभूतमिदं काव्यं निर्माय संस्कृतसाहित्यस्य महती सेवा कृतेत्यस्मिन् न कापि विचिकित्सा। साहित्यसरणिमविमुञ्चतो लेखकस्य कृतिरियं न कदाचित् विद्वत्समाजे उपहास्यतां यास्यतीति दृढं विश्वसिमि।

परन्तु कुत्रचित् स्थले व्यवहार-विरुद्ध-शब्द-निवेशो दृग्गोचरीभवति स संस्कृतसाहित्यसेविनां कृतेऽक्षम्यः। यथा एकादशे पृष्ठे

लेखकेन वेदान्तवेद्यो नाम शब्दः स्तुत्य-विषये प्रयुक्तः। अयं प्रयोगः केवलं परब्रह्मपरमात्मन्येव युज्यते नान्यत्रेति सिद्धान्तः। एवमेव कण्टकजन्यत्रुटिरपि बहुत्र स्थलेषु प्रायो दृश्यते तत्सर्वमागामिनि संस्करणे शोधनीयम्। अन्यत् सर्वं साध्विति।

देवीस्तुतिः— दुर्गासप्तशत्याश्चतुर्थाध्याये शक्रादिदेवकृताया स्तुतेर्हिन्दीव्याख्या; व्याख्याकारः—गणेशरामशर्मा साहित्यविशारदः, प्रकाशकः—लेखकः; आकारः— $\frac{20 \times 30}{16}$, पृष्ठानि ४०, मूल्यं न लिखितम्।

मयाऽऽमूलचूलं सुरसरस्वतीपादजुषा विदुषा सुधीजनविधेय-कर्मणा श्रीगणेशरामशर्मणा प्रणीतया सकलसाधारणबोधगम्यया हिन्दीव्याख्यया समन्विता सप्तशती-स्तोत्रान्तर्गता शक्रादिदेवकृता "देवीस्तुतिः" सम्यक्तयाऽवालोकि। वैदिकमार्गमनुसरतां सनातनधर्मावलम्बिनां कृते परमोपयोगि लघ्वाकारमिदं पुस्तकम्। 'कलौ चण्डीमहेश्वरौ" इति तान्त्रिकपद्धत्या चण्डीपाठस्य महत्त्वं विशिष्य प्रदर्शितमस्ति। तत्र शक्त्याराधनं विना न केचन किमपि कर्तुं प्रभवन्ति। ब्रह्मविष्णुशिवादयोऽपि शक्तिमन्तरा सृष्टिस्थितिलयान् विधातुं न प्रभवन्ति तर्हि का कथाऽन्येषाम्? शक्तिमहिमानं वर्णयितुं को नाम प्रभविष्यति।

सर्वत्र द्विजातिसमाजेषु चण्डीपाठस्य प्रचारो बहुलतया दृश्यते। एतदनुष्ठानेन सर्वेषां मनोऽभिलषितकार्याणि सिद्ध्यन्ति। अनेनाऽस्य पुस्तकस्य परमोपयोगित्वं स्वतः सिद्धं भवति।

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थोऽल्पकण्ठश्च षडेते पाठकाधमाः॥

इति शिक्षोक्तवचनानुसारमर्थानुसन्धानं विनैव चण्डीपाठे न साफल्यमञ्चतीति बुद्ध्या व्याख्यातृमहोदयस्य हिन्दीभाषायां व्याख्यारूपो महत्तमः प्रयासोऽतीव साफल्यं समाञ्चदिति दृढं प्रत्येमि।

अस्मिन् समालोच्यपुस्तके न कुत्रचित् स्थले मूले टीकायां वाऽशुद्धिलेशो न वा कण्टकजन्यत्रुटिश्च दृष्टिपथे समागच्छति। शुद्धसंस्कृत-पाठ-सुसंस्कृतं परममञ्जुलव्याख्योपेतं च पुस्तकमिदं लोके ग्राह्यतां

यास्यतीति । आशासे च पाठकाः पुस्तकमिदं संगृह्य व्याख्यातृ-महोदयस्य महान्तं परिश्रमं सफलयेयुरिति ।

पशुपति झा,
साहित्य-व्याकरणाचार्यः

**श्रीलक्ष्मणाभ्युदयं काव्यम्** — रचयिता, श्रीगणेशरामशर्मा विद्याभूषणः । आकारः $\frac{20 \times 30}{16}$, पृष्ठानि ११२ ।

श्रीगणेशरामशर्मविरचितं श्रीलक्ष्मणाभ्युदयं नाम खण्डकाव्यं १११ पद्यैः संवलितं डूंगरपुरनरेशश्रीलक्ष्मणसिंहस्य कीर्तिकौमुदीं विस्तारयन्नूतनं कमपि रसमातनोति सहृदयहृदयपटलेषु । राज-प्रशस्तिरूपेण काव्यरचनायाः परम्पराऽतिप्राचीना । अस्मिन् जनतन्त्र-युगे कामं न तादृशी राजभक्तिरवलोक्यतेऽपेक्ष्यते वा लोकेषु नृपान् प्रति तथापि पुरातनेषु राज्येष्वद्यापि प्रजानां हृदयानि लोकप्रियाणां शासकानां वृत्तानि बलादावर्जयन्त्येव, इदं पुनः काव्यं स्वातन्त्र्याधिगतेः प्राग् लिखितमासीदिति नात्र विषये कालाननुरूपता सम्भावनीया । काव्यस्य भाषा माधुर्यमयी, अलंकारसंयुता रसभावान्विता च सहसैव हृदयमाकर्षति नवोढेव । प्रधानतया रीतिर्वैदर्भी । क्वचित्तु भावानुरोधात्समासबहुला बाणशैल्यप्यवलोक्यते किन्तु न सा तथा शिरःशूलमुत्पादयति । हिन्दीभाषानुवादेनास्योपयोगिताऽप्यतीव वर्धिता ।

अत्र ९० श्लोकाः प्रहर्षिणीच्छन्दसि, अनुष्टुभि वसन्ततिल-कायाञ्च प्रत्येकम् एवम् १७ श्लोकाः शिखरिण्यां पद्यद्वयं च मन्दा-क्रान्तावृत्ते वर्तत इति छन्दोवैविध्यमपि काव्यस्य चारिमाणं समर्धयति ।

कामं सन्त्यत्र लघून्यपि काव्ये कानिचित्स्खलितानि यथा ६७ पद्ये कौलीन्यादिति, तद्धि ध्वनि-साम्यात् कौलीन शब्दस्य स्मारयति । क्वचित्-क्वचिद् यतिभङ्गोऽपि लक्ष्यते, यथा ८७ पद्ये १०७ पद्ये च, १०९ श्लोके च 'शासन्' इति प्रयोगे च्युतसंस्कृतिर्दोषः । सत्स्वप्येतेषु स्खलितेषु कृतिरियं रचयितुर्यशसः संस्कृत-साहित्यस्य च संवर्धयित्र्ये-वेति शम् ।

राधेश्याम गोस्वामी,
शास्त्री, एम.ए.

**श्रीसुशीलोद्वाहमङ्गलं श्रीलाक्ष्मणी प्रशस्तिश्च**—प्रणेता, पण्डित-गणेशरामशर्मा; प्रकाशकः—स्वयमेव; आकारः $\frac{२०\times३०}{१६}$, पृष्ठानि ४० ।

अस्यां रचनायां प्रणेत्रा डूंगरपुराधीशमहारावलश्रीलक्ष्मण-सिंहस्य विवाहस्तदीया प्रशस्तिश्चोपवर्ण्येते । पद्यबद्धा कृतिरियं द्विधा विभक्ता प्रथमे भागे चतुर्विंशतिश्लोकैः सुशीलया सह प्रवर्तमानं लक्ष्मणसिंहपरिणयमभिलक्ष्य मङ्गलाशंसनमपरस्मिंश्च भागे एकपञ्चाशच्छ्लोकैर्नृपतेरुदात्त-गुणाः सङ्कीर्तिताः । प्रथमभागस्य प्रथमं श्लोक-मतिरिच्यान्ये सर्व एव श्लोका वंशस्थच्छन्दसोपनिबद्धाः परं तत्र प्रायशोऽक्षरेषु गुरुलघुनियमानां शैथिल्यमवाप्यते । द्वितीये भागे प्रयुक्तं शार्दूलविक्रीडितं छन्दस्तु वृत्तनियमाननुसरति ।

श्रीसुशीलोद्वाहमङ्गलमिति शीर्षकं तावदेतस्यां कृतौ सुशीला-ख्यायाः कन्याया विवाहोत्सवस्य वर्णनं स्यादित्येव व्यनक्ति परं ग्रन्थान्तर्वर्तिश्लोकेषु नामानुरूपो निर्देशो न विहितः । द्वितीये श्लोके सुशीलेति पदं देव्याः पार्वत्या विशेषणत्वेन प्रायुज्यत, अन्तिमे च श्लोके 'सुशीलकन्यासुविवाहमङ्गलमि'ति कथनेन कन्यासामान्यस्य प्रतीतिर्जायते न तु कस्याश्चिद् विशिष्टाया व्यक्तेः । अस्मिन् भागे या पद्यरचना सा न तावद्रसात्मिका न चाप्यलङ्कारैरलंकृता । 'जीव्याच्चिरं यो रचयत्यनुत्तमं मुहुर्मुहुर्मञ्जु विवाहमङ्गलमि'त्येतादृशि वचांसि प्राक्तनीं सामन्तयुगीनां प्रवृत्तिमभिसूचयन्ति साम्प्रतिकानां काव्यरसिकानाञ्च हृदयेषु वैरस्यमुत्पादयन्ति । यद्यप्यस्य भागस्य भाषाऽकृत्रिमा प्रवाहमयी प्रसादगुणेन चोपेता परं कविसुलभहृदया-वर्जकभावानामलौकिककल्पनानाञ्चाभावो मन उद्वेजयति ।

द्वितीये भागेऽपि तादृशी चमत्कृतिर्न विलोक्यते यादृशी खलु कालिदासादीनां सुकवीनां स्वकृतिषु अकृत्रिमतयोपलभ्यते तथापि भाषाया भावानाञ्च लालित्यं यत्र तत्राध्येतुर्मनः प्रसादयति । अधस्तने श्लोके वीररसानुरूपभावस्य भावानाञ्च सम्यक् सन्निवेशः—

> यश्चाखण्डलचण्डविक्रमबलोद्दण्डप्रतापोज्ज्वल-
> दोर्दण्डेन हि खण्डखण्डमकरोत्प्रत्यर्थियूथानि च ।
> गर्ज्जद्दुर्मदमत्तकुञ्जरघटागण्डस्थलासृग्रसा-
> स्वादज्ञानपटुत्वतीव्रनखरः सिंहो नृपो लक्ष्मणः ॥२॥

अत्र 'च' 'हि' इति निपातयोर्न कोऽपि गुणः। एवमेव 'यश्चान्त-र्बहिरन्धकार०' इत्यस्मिन् श्लोके उपमारूपकालङ्कारौ दृष्टिपथ-मायातः।

साधयज्जातः (४१) इत्यत्र च मुद्रणदोषो विलोक्यते। द्वितीय-भागस्यान्तिमे श्लोके आङ्ग्लशासकान् प्रति या राजभक्तिः प्रदर्शिता सा सम्प्रति तत्कालीनां दासमनोवृत्तिमेव प्रकटयति अतएव तस्य श्लोकस्य निष्कासनमेव वरम्।

अद्यत्वे एतादृशाः प्रयासाः साधुवादार्हाः, एवंविधैः ग्रन्थैर्हि संस्कृत-काव्यधारा अविच्छिन्नप्रवाहा स्यात्।

—रामप्रतापो वेदालङ्कारः,
एम.ए., पी-एच.डी.

सुरभारती-सन्देशः—सन्देशवाहकः (रचयिता) श्री वासुदेव-द्विवेदः, वेदशास्त्री, साहित्याचार्यः (संस्कृतप्रचारपुस्तकमाला-सम्पादकः) प्रकाशकः—सार्वभौमसंस्कृतप्रचारकार्यालयः, वाराणसी, पृष्ठ-संख्या—१९२, मूल्यम्—२.५०।

सुप्रथितनामधेयेन संस्कृतप्रचारैकव्रतेन द्विवेदिश्रीमद्वासुदेवेन सुवाहितोऽयं सुरभारतीसंदेशः संस्कृतसंसारे कामपि क्रान्तिमुत्पादय-न्नवतरति। यत्सत्यम् सन्देशेऽस्मिन् 'संस्कृतशिक्षापद्धतेः संस्कृतविद्वत्-समाजस्य तथा संस्कृतविद्यार्थिवर्गस्य च कतिपयैरवाञ्छनीयैरहित-करैश्च स्वरूपैः भृशं परितप्यमानायाः सुरभारत्यास्तान् प्रति निज-दुःखनिवेदनात्मकः सन्देशस्तथा तेषां सर्वोत्कृष्टस्वरूपनिर्माणाय समयोचितकर्त्तव्यनिरूपणञ्च' इत्यादिविषयजातं साधु समुपवर्णित-मस्ति। सन्देशोऽयं पञ्चभिः प्रकरणैर्विभक्तोऽनुष्टप्छन्दसा प्रारभ्य शार्दूलविक्रीडितादिभिर्नवनवैश्छन्दोभिः परिसमापितो नूनं वाल्मीकि-रामायणरचनापद्धतिं स्मारयति। सन्देशस्यास्य भाषा स्वाभाविकी, प्रवाहपूर्णा, सरला, स्वच्छा, ललिता चास्ति। सन्देशेऽस्मिन् साश्रु-मुख्याः सुरभारत्याः करुणाकलितं निजदुःखनिवेदनं ग्रावाणमपि रोदयति, वज्रस्यापि हृदयं दलयति, कटुकमुग्रं भैषज्यमिव हितावहो-ऽसुखदा शल्यक्रियेव च सुखदोऽस्ति संदेशोऽयं संस्कृतज्ञानाम्। 'कर्णमर्द बहिष्कृता, 'मुखं गोपायितुं स्थानं न लेभेऽन्वेषयन्त्यपि', 'कस्य देवस्य शापतः', 'मुखं तस्य न वाञ्छामि कदाचिदपि वीक्षितुम्' इत्यादि-प्रयोगाः स्थाने प्रयुक्तास्सन्ति।

'देशेषूत्तरदक्षिणेषु सुचिरादाहिण्डता सर्वतः' इत्युद्घोषयता, प्राप्ते प्रसङ्गे बहूनां विदुषां बह्वीनाञ्च संस्थानां परिचयं, तेभ्यः साधुवादञ्च प्रयच्छता सन्देशवाहकेनोत्तरभारतस्थस्यैव स्वसंस्कृत-सेवया विश्वविश्रुतस्य, होशियारपुरस्थश्रीविश्वेश्वरानन्दवैदिकशोध-संस्थानस्याभिधानमपि न कुत्रापि स्मर्यते स्वसन्देशे इत्याश्चर्यमेव। किं बहुना, आत्मसमीक्षणपरीक्षणनिरीक्षणैषिभिः संस्कृतज्ञैरवश्यमेव संग्राह्योऽयं सुरभारती-सन्देशः। सन्देशस्यास्य सौन्दर्य्यं परिचाययितु-मिदं पद्यमेवालम—'कालेऽस्मिन् निजदेशजातिविषये कर्णे निधाया-ङ्गुलीर्नेत्रे चापि निमील्य वाचि निपुणं दत्त्वा दृढामर्गलाम्। श्रीमन्तो यदि शेरते सुखमये शय्यातले पण्डिताः स्वं देशं प्रति भो भवेदयमहो-विश्वासघातो महान्।'

—लक्ष्मण त्रिवेदी, सप्ताचार्यः

**श्रीनिवाससूक्तित्रिशती**—श्रीनिवासशास्त्रिप्रणीता। प्रकाशकः—वाणीवेश्म, कमरा नं. डी. ५४ इजरा स्ट्रीट, कलकत्ता; पृष्ठानि ३७, मूल्यम् ५० पणकाः।

प्रस्तुता कृतिः श्रीनिवासशास्त्रिणः सूर्यप्रभा किंवा वैभवपिशाच इत्याख्यस्याप्रकाशितस्य स्वकृतस्य संस्कृतोपन्यासस्योपदेशखण्डे निबद्धानां सूक्तीनां त्रिशत्याः पृथक् मुद्रितः संग्रहो वर्तते। उपदेशप्रभराः किलेमाः सूक्तयः सकललोकव्यवहारपाटवं शिक्षेयुरिति नो विश्वासः। पुराणवस्तुनोऽभिनवदिशा कालानुरोधिचमत्कारिवर्णनं नवतां विधत्तेऽतीव स्पृहणीयतां च भजतीति लोकाः सस्पृहमेनां कण्ठे करिष्यन्ति। हिन्दीभाषान्तरमपि स्वाशयास्फोटने साहाय्यमातनोति। तेन 'स्वर्णे सौगन्ध्यमापतितम्' न केवलमेषां वाक्यानां लोकयात्रामात्रं फलम्, प्रत्युत संस्कृतप्रसाराय प्रयतमानानां भाविलेखकानां भाषा-सौष्ठवापादने यथाकथंचिद् गुणाधायकत्वमपि फलं स्यात्। यथेदानीं हिन्दीप्रभृतिषु भाषासु भाषासौष्ठवार्थं मध्ये लोकोक्तयः सूक्तयं आभाणकाश्च प्रयुज्यन्ते तथा नवीनां सरणिं संश्रिता विबुधवागपि तादृशैः सुभाषितैर्विभूषिता स्वसौन्दर्येण पाठकानावर्जयेदिति। यदि च हिन्दीरूपान्तरे तत्तदर्थप्रकाशिकाः प्रसिद्धाः सूक्तयो यथातथमनू-द्येरन् तदा परमोत्कर्षः संभवेत्। अस्याः प्राक्तनेषु चतुर्दशपृष्ठेषु संस्कृतप्रसारयोजनामुद्दिश्य निवेदनरूपेण सुललितया भाषयोपस्थापितं उपन्यासस्थो हृदयग्राही प्रस्तावः संस्कृतमुद्धर्तुमिच्छुकैरवश्यमवधेयः।

(शिष्टं २८३ पृष्ठे)

# समाचाराः

## संस्थानीयाः

**नवप्रकाशनानि—**

१. 'विश्वज्योतिः' पत्रिकाया मार्चमासे 'भारतस्य भावनात्मिका एकता' इति संज्ञोऽङ्कः।

२. विषुवद्दिने (१३-४-६४) विश्वेश्वरानन्द-भारत-भारती-शोध-पत्रस्य (Vishveshvaranand Indological Journal) तृतीयोऽङ्कः।

**सरस्वती-समाजः—**

२७-२-६४ व्याख्याता—प्रा. शिवप्रसादोभारद्वाजः; भाषण-विषयः—'कालिदासस्य अभिज्ञान-शाकुन्तलं नाटचदृष्टचाऽसफलम्।'

२७-३-६४ व्याख्याता—श्रीलक्ष्मीनरसिंहभारती; भाषणविषयः—'पुराणकथाशास्त्रस्य तुलनात्मकमध्ययनम्।'

२४-४-६४ व्याख्याता—प्रा. परमानन्दः शास्त्री, भाषणविषयः—'वैदेशिकाऽऽक्रान्तॄणां भारतीयसंस्कृतौ प्रभावः।'

२९-५-६४ श्रीपीताम्बरदत्तशास्त्रिणो भावि व्याख्यानम्। भाषण-विषयः—'प्राचीन-वाङ्मय-शोध-चर्चा।'

जयन्ती-विशेषाः—२९-४-६४ दिने आचार्यविश्वबन्धोरध्यक्षतायां श्रीराम-जयन्ती हंसराज-जयन्ती च समायोज्यत। तत्र वक्ता प्राध्यापको वेदप्रकाशवेदालङ्कारः कविता-पाठकौ च प्राध्यापक इन्द्रदत्त उनियालः श्रीब्रह्मदेवश्चाभवताम्।

२६-४-६४ दिने च प्रि. रलारामस्याध्यक्षतायां महावीरजयन्त्या-योज्यत। तत्रावसरे शिवप्रसादभारद्वाजस्य भाषणमभवत्। उनियालो-पाह्वस्येन्द्रदत्तस्य सच्चिदानन्दस्य च कविता-पाठः, व्रजनन्दनस्य निबन्ध-पाठ, आचार्य विश्वबन्धोश्च व्याख्यानमभवत्।

३१-५-६४ दिने बुद्धजयन्त्युत्सवो मानयिष्यते।

## निरीक्षण-समितेरागमनम्—

३१-३-६४ दिने पञ्चापविश्वविद्यालये हिन्दीविभागस्याध्यक्षः आचार्यहजारीप्रसादो द्विवेदस्तथा जालन्धरनगरस्थपञ्चाप-विश्वविद्यालयकेन्द्रे प्राध्येता ( Reader ) डा. संसारचन्द्र महोदयश्च संस्थाननिरीक्षणाय समागच्छताम्। निरीक्षितेषु च सर्वेष्वपि संस्थानीयविभागेषु सायं समस्तकर्मिष्ठवर्गस्यैका सभाऽऽयोजिताऽभवत्। संचालकस्तत्र पुष्पमालोपहारेण आचार्यद्विवेदमहोदयमभिनन्द्य तस्य वैदुष्यं भारती-वाङ्मय-सेवाश्च वर्णयाञ्चकार। ततश्चोभयोरपि महानुभावयोः सुमधुरे भाषणे जाते अत्र संस्थान-कर्मिष्ठवृन्देन क्रियमाणं कर्म अतुलनीयं अपरिहार्यमविस्मरणीयं चोपवर्ण्य अस्य शुभायतिमकामयत।

## वर्धापनानि—

संस्थान-सदस्यः श्रीहरिप्रवेश आनन्दः, कर्मिष्ठः प्राध्यापकः श्रीराधेश्यामगोस्वामीति उभावपि पुत्रजन्मोत्सवेन, संस्थानसदस्यः श्रीराजहरिमंदानो विवाहोत्सवेन, संस्थानोपसंचालकः श्रीदेवदत्त-शास्त्री दुहितुरादर्शस्य पाणिग्रहणेन, दीवानरघुनाथसहायश्च आदरि-न्यायाधीशपदे नियुक्त इति सर्वेऽप्यमी दिष्टया वर्द्धन्ते। अन्यच्च, विश्वसंस्कृतस्योपसम्पादकः शिवप्रसादभारद्वाज उत्तरप्रदेशशासनेन तद्रचितं 'भारत-सन्देशं' काव्यमुद्दिश्य ७५० मुद्रात्मकेन पुरस्कारेण पुरस्कृतः।

# अन्ये

## विदेशगमने प्रतिबन्धः—

१. इतोऽग्रे संस्कृते विशेषाध्ययनार्थिनो भारताद् विदेशान् गन्तुं न प्रभवेयुर्न च छात्रवृत्तिं प्रदाय प्रेष्या इति भारतसर्वकार-निर्णयः।

## विदुषां नियुक्तिः—

२. यथाऽनुश्रूयते, भारतसर्वकारेण निजपरिपत्रद्वारा सर्वेऽपि भारतीयविश्वविद्यालयाः स्वकीयसंस्कृतविभागेषु न्यूनान्न्यूनमेकस्य प्राचीनपद्धत्या संस्कृतमधीतिनो विदुषोऽन्यविभागीयप्राध्यापकेभ्यः प्रदेयवेतनादिनिर्विशेषेण नियोक्तव्या इति।

### राजस्थान-संस्कृत-विश्वविद्यालयः—

३. राजस्थाने संस्कृतविश्वविद्यालयस्य स्थापना शीघ्रमेव भवितेति राज्यशासनेन प्रतिपन्नम्। तदर्थं स्थाननिर्वाचनं क्रियते। बीकानेरवासिनां तु तस्य स्थापना बीकानेरक्षेत्रे कार्येति अनुरोधः।

### संस्कृत-विदां दक्षिणा-गमनम्—

४. अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्यैकस्यां सभायां श्रीलालबहादुरशास्त्रिणा संस्कृतसेविनः सन्दिष्टा यथा ते दक्षिण-प्रदेशं गत्वा तत्र संस्कृत-सेवया सहोदीच्यानां दाक्षिणात्यानां च सौहार्दस्थापनया भारतस्य भावनात्मकैक्य-स्थापनायां सहायाःस्यु-रिति।

### संस्कृतोन्नतये द्रव्य-विनियोगः—

५. भारतस्य शिक्षामन्त्रिश्रीछागलामहोदयस्य कथनानुसारं तृतीयपाञ्चवर्षिकयोजनायां भारत-सर्वकारेण संस्कृताभ्युन्नतये ७५ लक्षसंख्यो द्रव्यराशिर्निश्चितः।

६. देहलीप्रशासनेन गतवर्षे कोटिप्रायद्रव्यात् संस्कृतस्य कृते केवलं २० सहस्र-रूप्यकाणि व्ययीकृतानि।

### नव-संस्कृत-संस्था-स्थापनायै श्रीशास्त्रिणोऽभिनिवेशः—

७. २-३-१९६४ दिने कलकत्तानगरे केन्द्रस्य निर्विभागमन्त्रिणा श्रीलालबहादुरशास्त्रिणोक्तं यत् प्रतिराज्यमेकस्य संस्कृतविश्व-विद्यालयस्य प्रतिमण्डलं च संस्कृतमहाविद्यालयस्य स्थापनया भवितव्यम् इति। अभ्युपपन्नं च तेन स्वयमत्र विषये राज्यानां मुख्यमन्त्रिषु सहायतानुरोधं कर्तुम्।

### संस्कृतसंस्थाधिवेशनम्—

८. श्रीलालबहादुरशास्त्रिणोऽध्यक्षत्वे मार्चमासस्य द्वितीये दिनाङ्के कलकत्तानगरे वङ्गप्रदेशसंस्कृतसाहित्यसम्मेलनस्याधिवेशनं जातम्। सभापतिभाषणे तेन संस्कृताध्ययने साग्रहमभिनिवेश उपदिष्टः।

### संस्कृत-विदुषां राष्ट्रिय-सम्मानम्—

१९६४ सम्वत्सरे जनवरीमासस्य गणतन्त्रदिवसे उद्घोषितेषु सम्मानेषु पुरा वाराणसेय-राजकीयसंस्कृतकालेजस्य (अधुना संस्कृत-विश्वविद्यालयः) आचार्यः महामहोपाध्यायः डा० गोपीनाथकविराजः

तथा च गुजरातप्रान्तस्य बहुमुखप्रतिभासम्पन्नो लेखकः भारतस्य विश्रुतः शिक्षाशास्त्री काकासाहेब कालेलकरश्च 'पद्म-विभूषण' उपाधिना, पुरातत्त्वविभागस्य भूतपूर्वो महानिदेशकः डा० टी. एन. रामचन्द्रन्महोदयः, प्रयागविश्वविद्यालये दर्शनविभागस्य भूतपूर्वो-ऽध्यक्षः डा० ए. सी. मुखर्जीमहोदयः अन्ताराष्ट्रियख्यातिसम्पन्नो भारतीय उपन्यासकारः श्री आर. के. नारायणश्चेत्येते सर्वे विद्वांसः राष्ट्रपतिना 'पद्मभूषण' उपाधिना सम्मानिताः। तथा च उत्कलप्रान्तस्य ख्यातः पुरातत्त्ववेत्ता श्रीपरमानन्द आचार्यः 'पद्मश्री' इत्युपाधिना पुरस्कृतः। सर्वेऽप्यमी हार्दमभिनन्दनमर्हन्ति।

## संस्कृतशोधाय पारितोषिकम्—

साहित्य अकादमी संस्थया, डा. बी. एन. के. शर्म्मणा लिखितः 'द्वैतदर्शनस्येतिहासः' (The History of the Dvaita System of Philosophy) नामको ग्रन्थः १९६३ संवत्सरे प्रदेयपारितोषिकाय निर्वाचितः। पारितोषिकेण सह ५००० रूप्यकैः सहितं ताम्रपत्रमपि संस्कृते शोधाय प्रदास्यते।

## सम्मानिताः कलाकाराः—

२३-२-१९६४ दिने ललितकलासमित्या भारतीयकलाप्रदर्शनी-प्रसङ्गे निम्नलिखिता भारतस्योत्कृष्टास्त्रयः कलाकाराः निर्वाचिताः।

(i) श्री रायकृष्णदासः।

(ii) श्री वी०पी० करमारकरः।

(iii) श्री एस०एल० हालडकरः।

ते सर्वे समित्याः पाङ्क्तेया निर्मितास्तथा तेषां प्रत्येकं पञ्चसहस्र-रूप्यकाणि पारितोषिकमपि प्रादायि।

## मद्रासे विवेकानन्दपीठस्य स्थापना—

मद्रासविश्वविद्यालये विश्वविद्यालयानुदानायोग (University Grants Commition) स्य साहाय्येन, धर्माणां तुलनात्मका-ध्ययनाय, प्राच्यसंस्कृतेः दर्शनस्य च विशेषेण परिशीलनाय विवेका-नन्दपीठस्य स्थापना करिष्यते।

## हस्तलिखितग्रन्थानां क्रयणसंस्था—

श्रूयते यथा प्रा० नीलकान्तशास्त्रिणोऽध्यक्षत्वे भारतशासनेन एका हस्तलिखितग्रन्थानां केन्द्रियक्रयणसंस्था निर्मिता वर्तते।

## धर्माणां तुलनात्मकमध्ययनम्—

अन्नामलाइ विश्वविद्यालयेन धर्माणां तुलनात्मकाध्ययनस्य प्रोत्साहनाय छात्रेभ्यो मासिकवृत्तिप्रदानस्य व्यवस्था कृतेति सूचना।

## शोकसमाचारः—

पञ्चाशत्प्रायाणां भाषाणां वेत्ता, आक्सफोर्डविश्वविद्यालये प्राच्य-विभागे मुख्यः प्राध्येता (Reader)—डा. जॉन नैश नामा अशीति-वर्षदेशीयो विद्वान् हेडिंग्टननाम्नि स्थाने निजगृहे १३-४-६४ दिनाङ्के स्वर्गतः। स तत्र त्रिंशद्वर्षपर्यन्तं कार्यं कृत्वाऽवकाशमलभत। श्री जॉन हालमहोदयस्येदं कथनं यत्—"We shall probably have to get two or three people to do the work, he had been doing". दिवंगतस्यात्मनो महत्त्वं व्यनक्ति।

## नवपत्रिकायाः स्वागतम् !—

संस्कृतपत्रपत्रिकापरिवारे दिने दिने सदस्यानां वृद्धिर्भवति इति महतो हर्षस्य विषयः। नातिचिरात् प्रसिद्धस्य वैदिकविदुषः महा-महोपाध्यायपण्डितश्रीपाददामोदरसातवलेकरमहोदयस्य प्रधान-सम्पादकत्वे पारडीस्थ स्वाध्यायमण्डलात् 'अमृतलता' संज्ञया नवैका त्रैमासिकी संस्कृतपत्रिका जनिमलब्ध। विषयसामग्र्या कलेवर-सौष्ठवेन च सर्वतो मनोहरेयं पत्रिका लेखानां प्रौढिमद्वारेण बाल्य एव बहिरन्तश्च प्रौढिमानं धारयन्ती विदुषामभिनन्दनीया।

## त्रैमासिकी सागरिका—

सागरविश्वविद्यालयाद् द्वित्रैर्वर्षैः षाण्मासिकत्वेन प्रकाश्यमाना सागरिका नाम पत्रिका प्रतिपाद्यविषयगरिम्णा कलेवरचारिम्णा च कमपि महिमानं भजन्ती अधुना त्रैमासिकी जाता इति सा संस्कृतानु-रागिणां हार्दिकीं स्वागतवाचमर्हति। सिद्धलेखनीकस्य विद्वन्मण्ड-लस्य हार्दं योगं लभमाना पत्रिकेयमग्रेऽपि तादृशं गरिमाणं भजिष्यतीति तस्या विषये साधीयसी संभावना।

---

# सूक्ति-सुधा

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीताऽसि ॥

याते मय्यचिरान् निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसन्ततिरसौ सन्तापमालाऽऽकुला ।
एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो, धिग् वारिधीनां जनुः ॥

भुक्ता मृणालपटली भवता निपीता-
    न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
    कृत्येन केन भवितासि कृतोपकारः ? ॥

विदुषां वदनाद् वाचः सहसा यान्ति नो बहिः ।
याताश्चेन् न पराञ्चन्ति द्विरदानां रदा इव ॥

कस्मै हन्त फलाय सज्जन गुणग्रामार्जने सज्जसि
स्वात्मोपस्करणाय चेत् मम वचः पथ्यं समाकर्णय ।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृता-
स्तैरेवास्य [illegible] कलेवरपुषो दैनंदिनं वर्तनम् ॥

— जगन्नाथ पण्डितराजस्य

# विश्वेश्वरानन्द वैदिक शोध-संस्थान

के

# संस्कृत प्रकाशन

सम्पादक :—**आचार्य विश्वबन्धु**

●

## शान्तकुटी वैदिक ग्रन्थमाला

खंड १ से १५. वैदिक-पदानुक्रम-कोष, पाँच विभागों में :—

| | |
|---|---|
| संहिता | ६ खण्ड |
| ब्राह्मण | २ ,, |
| उपनिषद् | २ ,, |
| वेदाङ्ग | ४ ,, |
| सामान्य | १ ,, |

समस्त १५ खण्डों अथवा एक विभाग के समस्त खण्डों के लिये आदेश आमन्त्रित हैं।

कागज़ और जिल्द की दृष्टि से तीन कोटियों में उपलब्ध।

एक खण्ड का मूल्य :—१म कोटि रु. ४०.००
२य ,, रु. ३०.००
३य ,, रु. २०.००

१६. ऋग्वेद पदानुक्रमणी रु. ५०.००

१७. अथर्ववेद पदानुक्रमणी रु. ६०.००

१८ से १९. चतुर्वेद पदानुक्रमणी (२ खण्ड)

तीन कोटियों में उपलब्ध :—१म कोटि रु. ५०.००
२य ,, रु. ४०.००
३य ,, रु. ३०.००

२०. तैत्तिरीयसंहिता-पदानुक्रमणी रु. ४०.००

२१. उपनिषद्-पदानुक्रमणी रु. ३०.००

●

मिलने का पता :—

# विश्वेश्वरानन्द पुस्तक भण्डार,

**साधु आश्रम, होशिआरपुर**

## Vishveshvaranand Indological Research Series

(Size ; 10″×6½″)

1. Vols. I-II. **Siddha-Bhāratī** or **The Rosary of Indology** Ed. Vishva Bandhu, (1950). ... 60-00
2. Vol. III. (**Purāṇa-Viṣaya-Samanukramaṇikā** Ed. Prof. Y. P. Tandon, (1962). ... 6-00
3. Vol. IV. **Gaṇikā Vṛtta-Saṅgraha** or **Texts on Courtezans in Classical Sanskrit** by Dr. L. Sternbach, (1953). ... 20-00
4. Vol. V. **The Etymologies of Yāska** by Dr. Siddheshvar Varma, (1953). ... 25-00
5. Vol. VI. **Sarūpa-Bhāratī** or **The Homage of Indology** Ed. Prof. Jagannath Aggarwal and Prof. Bhim Dev, (1954). ... 40-00
6. Vol. VII. **Ideologies of War and Peace in Ancient India,** by Prof. Indra, (1957). ... 20-00
7. Vol. VIII. **Epochs in Hindu Legal History,** by Dr. U. C. Sarkar, (1958). ... 30-00
8. Vol. IX. **Studies in Indian Cultural History,** by P. K. Gode, (1961). ... 30-00
9. Vol. X-XI. **Catalogue of V. V. R. I. Manuscript Collection,** Pts. I & II, Ed. Vishva Bandhu (1959). ... 80-00
10. Vol. XII. **The Punjab as a Sovereign State,** by Dr. G. L. Chopra, (1960). ... 15-00
11. Vols. XIII-XVI. **Atharvaveda.** Ed. Vishva Bandhu. ... 180-00
12. Vol. XVIII. **Saṅkarṣa Kāṇḍa Sutras of Jaimini,** Ed. K. V. Sarma, (1963). ... 5-00
13. Vols. XIX-XXVI. **Ṛgveda,** Parts I-VIII. Ed. Vishva Bandhu, Vol. II-III. ... 90-00
    Vol. I & IV (due March, '65) ... 90-00
14. Vols. XXVII-XXIX. **Chāṇakya-Nīti-Text-Tradition,** by Dr. L. Sternbach. ... 30-00
15. Vol. XXX. **Dṛgganitam of Parameśvara,** Ed. K. V. Sarma (1963). 5-00

–: *Available from* :–

**VISHVESHVARANAND BOOK AGENCY**
P.O. Sadhu Ashram,
HOSHIARPUR (Pb. INDIA).